त्रयोदश पुराणम्, यथोक्तं मात्स्ये— 'यत्र माहेश्वरान्धर्मा-
नधिकृत्य चतुर्मुखः । कल्पे तत्पुरुषं वृत्तैश्चरितैरुपबृंहितम् ॥
स्कान्दं नाम पुराणं तदकाशीतिर्निगद्यते । सहस्राणि शतं
चैकमिति मात्स्येषु पठ्यते' इति । तच्च सनत्कुमारीयादिषट्
संहितात्मकम्, यथोक्तं स्कान्दे — 'तत्र स्कान्दं प्रवक्ष्यामि
पुराणेषु त्रयोदशम् । संहिताभिस्तथा षड्भिर्लक्षमन्यैर्विरा
जितम् ॥ आद्या सनत्कुमारीया द्वितीया सूतसंहिता ।
ब्राह्मी तु संहिता पश्चात्तुरीया वैष्णवी मता ॥ पञ्चमी
शाङ्करी ज्ञेया सौरी षष्ठी तु संहिता' इति । तत्र पञ्चम्यां
शङ्करसंहितायां शिवरहस्यखण्डे गौरीनारायणसंवादे गौर्यै
विष्णुनोपदिष्टं शिवनामाष्टोत्तरशतं व्याख्यायते ॥

अत्र केचिदाहुः —स्कान्दपुराणान्तर्गतानां नाम्नां प्रामाण्यं
न संभवति, स्कान्दादीनां तामसपुराणत्वेनाप्रमाणत्वात्, तथा
हि— पुराणानां कर्ता चतुर्मुखः केषुचित्कल्पेषु सत्त्वेनोद्रिक्तो
भवति, केषुचिद्रजसा, कपुचित्तमसा, स यदा सत्त्वेनोद्रिक्तः,
तदा वैष्णवानि पुराणानि प्रणिनाय, यदा रजसोद्रिक्तस्तदा
ब्राह्माणि, यदा तमसोद्रिक्तस्तदा शैवानि, एवं च तमोगुणा
न्धब्रह्मप्रणीतानि शैवपुराणानि भ्रान्तजल्पितानीवाप्रमा-
णान्येव, वैष्णवपुराणानि तु सत्त्वोद्रिक्तब्रह्मप्रणीतानि प्राह्य

वाक्यानीव प्रमाणानि; यथोक्तं मात्स्ये— 'संकीर्णाः सात्त्विकाश्चैव राजसाश्चैव तामसाः । यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते । अग्ने शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् ॥ राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः । संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥ सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्' इति । यद्यप्युदाहृतश्लोकेषु ब्रह्मणः कल्पभेदात्तत्तद्गुणोद्रिक्तत्वं न स्फुटं प्रतीयते, तथापि तत्तद्गुणाधिकमूर्तिमाहात्म्यस्य तत्तद्गुणोद्रिक्तब्रह्मप्रतिपाद्यत्वौचित्यात्, 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम्' इति मोक्षधर्मवचनेन, स्वस्वकटाक्षेण सत्त्वादिगुणप्रवर्तकविष्ण्वादिमाहात्म्यप्रतिपादनस्य सत्त्वादिमूलकत्वौचित्याच्च, ब्रह्मणस्तत्तत्पुराणप्रणयनकाले तत्तद्गुणोद्रिक्तसिद्धिः । न चोदाहृतवचनजातस्य तामसमात्स्यपुराणान्तर्गततया अप्रमाणत्वे सति नाभिमतार्थसिद्धिः, प्रमाणत्वे तु व्याघात इति वाच्यम्; तामसपुराणान्तर्गतत्वेन हि मानान्तरविरोधे दुर्बलत्वादप्रामाण्यं भवेत्, न तदभावेऽपि

सम्भवदौत्सर्गिकं प्रामाण्यं हातव्यमिति प्रामाण्यसंभवात्, ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षो क्तौ निग्रहासम्भवेनास्य वचनस्य तत्त्वपरत्वोपपत्तेश्च । न चानेकपुराणाप्रामाण्यकल्पनादेकस्यैतस्याप्रामाण्यकल्पनं न्याय्यम्, भूयसा बलीयस्त्वादिति वाच्यम्, ब्रह्मशिवप्रतिपादकपुराणेषु एतद्वचनप्रतिपाद्यस्य स्वकीयरजस्तमोमूलकत्वस्य कण्ठरवेण प्रतिषेधाभावान्न साक्षादस्ति विरोधः, किं तु तेषु स्ववाचाद्घाटितं प्रामाण्यम् एतद्वचनगम्यरजस्तमोमूलकत्वविरोधीति परंपरया विरोधः, तत्रापि नानेन वचनेन प्रागसिद्धं तेषामप्रामाण्यं प्रतिपाद्यते, किं तु परस्परविरुद्धार्थानां सर्वेषां पुराणानां प्रामाण्यानुपपत्तौ क्वचित् प्रामाण्ये पर्यवसाययितव्ये विषयव्यवस्थामात्रतात्पर्येण प्रवृत्ततया विरोधाभावात्, एवं बलवतानेन निश्चितरजस्तमोमूलकानां तेषां बहूनामपि बहुभ्रान्तवचनानामेकप्राज्ञवचनादिव एतद्वचनाद्दुर्बलत्वात् । किं च न केवलमियतैव तेषामप्रामाण्यम्, प्रत्यक्षश्रुतिविरोधादिभ्योऽपि तत्सिद्धेः । तथाहि, श्रुतौ तावत्— 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' 'तस्मै विरूपाक्षाय दन्ताञ्जलये सहस्राक्षाय ब्रह्मणः पुत्राय नमः' इत्यादिवाक्यैर्नारायणस्य सर्वजनकत्वं रुद्रस्य

तज्जन्यत्वं तज्जन्यब्रह्मजन्यत्वं च श्रूयते; लैङ्गादिषु तु तद्विरुद्धं रुद्रस्य सर्वजनकत्वं नारायणस्य तज्जन्यत्वं तदुपासकत्वं च प्रतिपाद्यत इति श्रुतिविरोधः । किं च लैङ्गे 'युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अथ मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः । वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः' इति शिवाद्ब्रह्मनारायणयोरुत्पत्तिमुक्त्वा प्रदेशान्तरे विष्णु प्रति वचने 'त्वत्कोपसंभवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः' इति नारायणाद्ब्रह्मरुद्रयोरुत्पत्तिर्वर्णिता इति स्वव्याघात ; तदेवं वक्तुस्तामसत्वदोषात्, श्रुतिविरोधात्, स्वव्याघातात्, स्वोक्तार्थस्य प्रमाणत्वाभिमतपुराणान्तराननुगृहीतत्वात्, लैङ्गस्यादौ 'तस्माद्भवन्त पृच्छामः सूत पौराणिकोत्तम । पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुताम्' इति विशेषनिष्ठप्रश्नोपक्रमेण प्रवृत्ततया लिङ्गमाहात्म्यवर्णनामहस्य स्पष्टत्वात्, कौर्मादिषु तच्छ्रोकोपात्वप्रसिद्धेः, अतिविस्तृततया च सर्वेषां प्रक्षेपशङ्कासंभवाच्च शिवपुराणानां न प्रामाण्यं संभवति । विष्णुपुराणानां तु सर्वप्रकारेणाप्युक्तवैपरीत्यात्प्रामाण्यमस्ति । तथा हि— विष्णुपुराणस्य वक्ता पराशरः, स च वसिष्ठपुलस्त्यवरप्रसादलब्धदेवतापारमार्थ्यज्ञान इति विष्णुपुराणलैङ्गादिषु प्रसिद्धम् । अत एव लैङ्गे

'पराशरस्यावतारो व्यासस्य च शुकस्य च' इति भगवती-व पराशरेऽप्युत्पत्तिरिति वक्तव्ये अवतार इति प्रयुक्तम् । एवं च वक्तृगुणः, तथा 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्' इति वचनेन 'न ब्रह्मा नेशानः' इत्यादिश्रुत्यानुगुण्यम्; तथा सर्वत्र विष्णूत्कर्षस्यैव प्रतिपादनात् न कापि स्वव्याघातः । यत्तु तत्र तत्र कैलासयात्रादेवकीगर्भोत्पत्त्या-दिपरत्वविरुद्धधर्मोपवर्णनम्, तत्प्रसक्तापकर्षस्य 'सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु' इत्यादिना लीलारूपत्वेन परिहृतत्वान्न कापि स्वव्याघातः; तथा विष्णुपुराणोक्तार्थस्य तद्विरुद्धलैङ्गादिभिरपि 'सर्वे विष्णुमया देवाः सर्वे विष्णुमया गणाः । न हि विष्णुमया काचिद्गतिरन्या विधीयते ॥ इत्येवं सततं वेदा गायन्ते नात्र संशयः । स्वत्कोपसंभवो रुद्रस्तमसा च समावृतः ॥ सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु' इत्यादिना प्रतिपादितत्वेन सर्वपुराणसंवादित्वम्; तथा 'सोऽहमिच्छामि वै धर्म श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग भविष्यति' इति सामान्यतः प्रश्ने 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्' इति विशेषनिर्णयोत्तररूपेण प्रवृत्ततया कचिदप्यन्यापहासाभावः स्पष्ट इति तत्त्वावेदकत्वं स्फुटम्; तथा षट्साहस्र्या अपि श्रु-

प्रमाणतया न नष्टकोशत्वशङ्कावकाशः; अत एवानतिविस्तृततया प्रक्षेपशङ्काभावश्चेति वैष्णवान्येव पुराणानि प्रमाणानि; शैवानि तु तद्विरुद्धे प्रमाणानि भवन्त्यपि तद्विरुद्धे शिवोत्कर्षे न सर्वथैव प्रमाणानीति ॥

अत्रोच्यते— यद्यपि परैरित्थं शैववैष्णवपुराणानां वैलक्षण्ययुक्तमिति तद्वैपरीत्येन विष्णुपुराणानामप्रामाण्यं प्रतिपादनीयम्, तथापि तत्त्वावेदनप्रवृत्तैरस्माभिर्न तथा कर्तुमुचितम्; न हि परेण भ्रान्तमिति स्वेनापि भ्रमितव्यम्। अतः सर्वपुराणप्रामाण्यव्यवस्थापक सिद्धान्तः प्रस्तूयते— यत्तावदुक्तं वक्तुस्तामसत्वदोषादिति, तदेवासिद्धम्; तथाहि— पुराणानां को वक्तेत्यभिमानः? चतुर्मुख इत्युक्तमेवेति चेत्, सत्यमुक्तम्, तदेव तु त्वदुक्तं भवद्भ्रान्तिकल्पितम्; सात्त्विकादित्रिविभागकथनाभिप्रेत भवतैव प्रमाणतयाभ्युपगते महाभारत एव शान्तिपर्वणि राजधर्मे शिव एव सर्वपुराणानामादिवक्तेत्युक्तत्वात्। तथाहि— 'भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः। असृजत्सर्वशास्त्राणि महादेवो महेश्वरः॥ विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पना। अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः॥ पुराणं धर्मशास्त्राणि विद्या ह्येताश्चतुर्दश। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते

त्रयः ॥ अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु । दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ॥ एतासामेव विद्यानां व्यासमाह महेश्वरः । शतानि त्रीणि शास्त्राणि प्राह तन्त्राणि सप्ततिम्' इति सामान्यत उक्त्वा, 'तन्त्रं पाशुपतं नाम पाञ्चरात्रं च विश्रुतम् । योगशास्त्रं च विख्यातं तन्त्रं लोकायतं तथा' इत्युपक्रम्य 'दश चाष्टौ च विज्ञेयाः पुराणा यज्ञसंहिताः । पुराणस्य प्रणेतारस्तावदेव हि संहिताः ॥ धर्मशास्त्राणि तावच्च एकार्थानीति नान्यथा । एकार्थानि पुराणानि वेदाश्चैकार्थसंश्रयाः' इत्युक्तम् । तथा तत्र तत्र पाञ्चरात्रादिषु विष्ण्वादिकर्तृकत्वस्मरणस्य प्रवक्तृत्वपरत्वं दर्शयितुम् 'कल्पे कल्पे महाभागैर्ऋषिभिस्तत्त्वदर्शिभिः । ऋषिपुत्रैश्च सैस्तैर्हि विष्णुना च विकल्पिताः' इत्यप्युक्तम् । तथा च 'तस्मै वेदान्पुराणानि दत्तवानग्रजन्मने' इति पुराणवचनोपबृंहितया 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यनुक्तपुराणसमुच्चयार्थकचकारवत्या श्रुत्या सर्गाद्यकाले शिवाद्ब्रह्मणा पुराणानां प्रवक्तारं चतुर्मुखं इति सिद्धत्वेन तस्य पुराणप्रणेतृत्वासिद्धेः । न च प्रवक्तुस्तमोभिभवो दोषाय; तस्य प्रणेतृदोषवत् ग्रन्थाप्रामाण्यानापादकत्वात्, अन्यथास्मदादिपठित-

तत्रैद्वाक्यानामपि अप्रामाण्यापत्तेश्च । किं चाय पुराणाना प्रवक्ता वा अस्तु प्रणेता वा, सर्वथापि स यदि पुराणानि युगपदनुक्त्वा कचित्कल्पे कानिचित् कचित्कल्पेऽपराणि च प्रणयेत्, तदा घटेतापि कथचिदभिमतलाभप्रत्याशा, तदेवासिद्धम्—यत्पुराणे यत्प्रकरणे विद्यमान वचनमुदाहृत्य चिन्तयितुमिष्यते, तत्रैव मात्स्ये तस्मिन्नेव पुराणस्वरूपविवेचनप्रकरणे उपक्रम एव 'पुराण सर्वशास्त्राणा प्रथम ब्रह्मणा स्मृतम् । अनन्तर तु वक्त्रेभ्यो वेदास्तस्य विनिर्गता ॥ पुराणमेकमेवासीत्तदा कल्पान्तरे नृप । त्रिवर्गसाधन पुण्य शत कोटिप्रविस्तरम् ॥ निर्दग्धेषु च लोकेषु वाजिरूपेण वै पुरा । अङ्गानि चतुरो वेदान्पुराण न्यायविस्तरम् ॥ मीमासा धर्मशास्त्र च परिगृह्य मया कृतम् । मत्स्यरूपेण तु पुन कल्पादावुदकार्णवे ॥ अशेषमेतत्कथितमुदकान्तर्गतेन च । श्रुत्वा जगाद च मुनीन्प्रति मत्तश्चतुर्मुख ॥ प्रवृत्ति सर्वशास्त्राणा पुराणस्याभवत्तत । कालनाग्रहण दृष्ट्वा पुराणस्य ततो नृप ॥ व्यासरूपमह कृत्वा सहरामि युगे युगे । चतुर्लक्ष प्रमाणेन द्वापरे द्वापरे सदा ॥ तथाष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रकाशये । अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥ तदर्थोऽत्र चतुर्लक्षे सक्षेपेण निवेशित ' इति सर्गाम्कल्पे

युगपदेव ब्रह्ममुखादविदितब्राह्मपाद्मादिविभागस्य शतकोटिग्रन्थसंख्याकस्य पुराणस्कन्धस्यैकस्यैव निर्गममुक्त्वा ततः कल्पान्ते जगत्येकार्णवे सति नष्टेष्वध्येतृपुरुषेषु चतुर्दशविद्यास्थानान्यपि धारयता भगवता मत्स्यरूपेण 'कल्पे कल्पे महाभागैर्महर्षिभिस्तत्त्वदर्शिभिः । ऋषिपुत्रैश्च तैस्तैर्हि विष्णुना च विकल्पिता' इति महाभारतोक्तरीत्या प्रवचनमात्रं पुराणानां कृतम्, तन्मुखाच्चतुर्मुखः श्रुत्वा तथैवाण्डरूपेण तत्पुराणं मुनिभ्य उपदिदेश, ततो बहुतिथे कालेऽतीते द्वापरान्ते प्रसक्ते मनुष्याणामायुर्ह्रासात्तावद्विस्तृतपुराणस्कन्धाध्ययनाध्यापनशक्तिकौण्ठ्यं पर्यालोच्य लोकानुजिघृक्षया भगवतैव व्यासरूपेणाष्टादशधा विभागश्चतुर्लक्षणः संक्षेपश्च कृत इति प्रतिपादनेन पुराणापि कल्पे ब्रह्मणा विभज्य कथनस्य कतिपयपुराणकथनस्य चासिद्धेः कथमभिमतलाभ इत्यास्तामेतत् ॥

तत्तत्कल्पेषु ब्रह्मा तत्तद्गुणोद्रिक्त इति यदुक्तम्, तत्र वा किं मानम्? न तावदुदाहृतं वचनम्, तस्योक्तार्थबोधकत्वाभावात्। न च 'तत्स्वरूपेण' इत्येतदेव प्रमाणमिति वाच्यम्, 'यस्मिन्कल्पे तु यत्प्रोक्तम्' इति पुराणपरद्वितीयपादस्थप्रतिनिर्देशात्मकेन तच्छब्देन पुराणस्यैव परामर्शात्

'तत्त्वरूपेण' इत्यस्य तत्पुराणस्वरूपेणेत्यर्थकत्वात् । यच्चो-क्तम्— तत्तद्गुणाधिक्महिमवर्णनस्य तत्तद्गुणाधिकप्रवक्तृक-त्वौचित्यादिति, तत्तुच्छम्, वर्ण्यवर्णकयोरैकरूप्यनियमा-सिद्धेः— न ह्यन्धोऽन्धेनैव वर्णनीयः बधिरो बधिरेणेति नियमः, सात्त्विकेनैव व्यासेन तामसानामसुरादीनां वर्ण-नात् । ननु न सात्त्विकस्तामसस्योत्कर्षं भ्रान्त्वा वर्णयति, तामसस्तु तथा करोतीत्यौचित्यमिति चेत्, तदपि न; एव-मपि राजसोत्कर्षवर्णनस्यापि भ्रममूलकतया तत्रापि वक्तु-स्तामसत्वे कल्पनीये राजसत्वकल्पनायोगात्, रजसः प्रवृ-त्तिधर्मकत्वेन तमोवदज्ञानजनकत्वाभावात्; कथंचिद्भ्रमे वा व्यवस्थानुपपत्तेः—राजसतामसोत्कर्षवर्णनयोर्भ्रममूलत्वावि-शेषे राजसोत्कर्षवर्णनं राजसेनैव, तामसोत्कर्षवर्णनं तामसे-नैव कर्तव्यमिति व्यवस्थाया नियामकाभावात् । यदप्युक्तम्— तत्तद्गुणप्रवर्तकमहिमवर्णनस्य तत्तद्गुणमूलकत्वौचित्यादिति, त-दपि न; भागवतादावप्रयोजकत्वात्, अन्यथा वातप्रकोपजनक-पदार्थगुणपाठस्यापि वातमूलकत्वकल्पनापत्तेः । किं च, 'सं-कीर्णेषु सरस्वत्याः पितृणां च निगद्यते' इति श्रवणात् यस्मि-न्कल्पे गुणत्रयसंकीर्णश्चतुर्मुखः तस्मिन्कल्पे पितृमरस्वतीप्र-तिपादकपुराणं प्रणिनाय इत्यपि कल्पनापत्तेः; न चेष्टाप-

त्तिः, तादृशपुराणाभावात् । न च तादृशपुराणमेकं प्रणीय भागशस्तेषु तेषु प्रचिक्षेपेति वाच्यम्; पुराणानामादिकाल एव कल्पसंख्याश्रवणस्य तत्तदनुक्रमणिकाध्यायोक्तकथानुक्रमणस्य च विरोधात् । यदप्युक्तम्— कल्पेषु सात्त्विकादिव्यपदेशान्यथानुपपत्त्या तत्प्रवर्तकस्य ब्रह्मणस्तत्तद्गुणोद्रेकसिद्धिरिति, तदपि न; हेमन्तादिषु हिमकालादिव्यपदेशवत्कल्पानां तत्तद्गुणप्राचुर्येण तत्तत्समाख्योपपत्तेरास्तामिदमपि ॥

यच्चोक्तम्— बहूनां पुराणानामप्रामाण्यकल्पनादेकस्यास्य वचनस्याप्रामाण्यकल्पनं युक्तं भूयसां बलीयस्त्वादिति शङ्कामुद्भाव्य तत्परिहारावसरे नानयोः साक्षाद्विरोधोऽस्ति किं तु परंपरया इति, तस्याभिप्रायं न विद्मः, न हि परंपरया विरोधे भूयसां बलीयस्त्वं नास्ति, साक्षाद्विरोधे त्वस्ति इति कल्पयितुं शक्यम् । यदप्युक्तं तत्रैव— नानेन बहूनामप्रामाण्यं प्रतिपाद्यते किं त्वविशेषेण प्रसक्तस्य तस्य विशेषपर्यवसानं क्रियत इति, तदप्यसंगतम्; किमनेन विरोधः परिहृतः ? बाढमिति चेत्, अस्तु, केन तर्ह्यप्रामाण्यं शिवपुराणानामापादितम् ? परस्परविरोधेनेति ब्रूमः; नैतदस्ति, सर्वसारणः स कथं शिवपुराणानामप्रामाण्यमापादयेत्; एतद्वचन-

साचिव्येनेति चेत्, हन्तैवमागतो विरोधः; परं तु कश्चिदन्योऽपि हेतुरासीदित्यन्यदेतत् । उभयोर्हेतुत्वेऽपि प्राप्ताप्राप्तविवेकेन परस्परविरोधेन सिद्धस्याप्रामाण्यस्य स्थलविशेषनिर्णयमात्रेऽस्य व्यापार इति चेत्, न; तन्निर्णयार्थमप्यप्रामाण्यव्याप्यतमोमूलत्वप्रतिपादनमुखेन प्रवृत्तस्य अस्य वचनस्य बहुप्रमाणविरोधो दुष्परिहर एव । इदमप्यास्ताम् ॥

यच्चोक्तम्— अस्यैव वचनस्य तामसपुराणान्तर्वर्तितया कथं प्रामाण्यमिति शङ्कायां मानान्तराविरोधात्संभवद्यौक्तिकं प्रामाण्यं न क्षतमिति, तदप्ययुक्तम्; प्रागुदाहृतभारतवचने 'पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' इति विद्यापदप्रयोगात्, 'दश चाष्टौ च विख्याता एता धर्मस्य संहिताः' इति धर्मसंहितापदप्रयोगाच्च प्रमाणत्वेन परिगणितासु विद्यासु पुराणं सामान्यत उपादाय 'एतासामेव विद्यानां व्यासमाह महेश्वरः' इत्युपक्रम्य तत्तद्विद्याभेदानुक्रमायमरे 'दश चाष्टौ च विज्ञेयाः पुराणा यत्नसंहिताः । पुराणस्य प्रणीताश्च तावद्देव हि संहिताः ॥ धर्मशास्त्राणि तावच्च एकार्थानीति नान्यथा । एकार्थानि पुराणानि वेदाश्चैकार्थसंहिताः' इत्यष्टादशपुराणानां परिगणनेन तेषु श्लोकमात्रस्याप्यप्रामाण्यानुपपत्तेः । न हि प्रमाणानि चतुर्धा प्र-

लक्षादिभेदेन, तत्र प्रत्यक्षं द्विविधं लौकिकालौकिकभेदेन— इत्युक्ते किंचित्प्रत्यक्षमप्रमाणीभवितुमर्हति । अपि च परस्परविरोधादप्रामाण्यमिति भ्रमोऽपि न कर्तव्य इति दृष्टयैव तत्रैव 'एकार्थानि पुराणानि' इति पठितत्वाच्च मानान्तरविरोधो दुष्परिहर एव । का तर्हि तस्य वचनस्य गतिरिति चेच्छृणु— 'सङ्कीर्णाः सात्त्विकाश्चैव राजसाश्चैव तामसाः' इति तत्तद्गुणप्रचुरतया कल्पास्तथा तथा व्यपदिश्य, 'अग्ने शिवस्य' इत्यादिना तत्तद्गुणोत्कर्षकाले तत्तद्गुणोपाधिकमूर्तेराधिक्यमुचितमित्यभिप्रायेण ब्रह्मायुःकल्पाना कल्पभेदप्रवृत्तत्वमुपपाद्य, 'यस्मिन्कल्पे' इति श्लोके 'कल्पे' इति विषयसप्तमीं कृत्वा यं कल्पं विषयीकृत्याधिकृत्य यत्पुराणं प्रोक्तं प्रथममुक्तं ब्रह्मणा, प्रशब्दस्य प्राथम्यपरत्वेन 'तेन प्रोक्तम्' इत्यादाविव प्रोक्तशब्दस्य प्रथमवचनमात्रपरत्वात्, तत्स्वरूपेण तत्पुराणस्वरूपेण तस्य तस्य माहात्म्यं तत्तत्कल्पस्य माहात्म्यं वर्ण्यते, घनविद्युद्गर्जितादिवर्णनस्य वर्षाकालवर्णनत्ववत् तत्तत्कल्पप्रवृत्तयग्न्यादिमाहात्म्यवर्णनस्यैव तत्तत्कल्पवर्णनात्मकत्वादिति प्रतिपादनेन भिन्नभिन्नस्वविषयाणां पुराणानां नास्ति परस्परविरोध इति, 'एकार्थानि पुराणानि' इति भारतोक्तरीत्या सर्वपुराणप्रामाण्योपपा

दनतात्पर्यकत्वेन समञ्जसत्वात्; एवं कस्याप्यबाधेनोपपत्तौ कतिपयपुराणप्रामाण्यबाधस्यायुक्तत्वात् । स्पष्टश्चायमर्थः कौर्मशैवादिषु । यथोक्तम्— 'असंख्याताः स्मृताः कल्पा ब्रह्मविष्णुशिवात्मकाः । कथिताश्च पुराणेषु मुनिभिः कालचिन्तकैः ॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तामसेषु महेशस्य राजसेषु प्रजापतेः ॥ क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥ तत्तत्कल्पान्तवृत्तान्तमधिगम्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ' इति; किंच, अष्टादशपुराणानां दानविधिं वक्तुमुपक्रम्य मध्ये, नन्वष्टादशानां प्रामाण्यं न संभवति परस्परविरोधात्, अतो लोकायतादिवदप्रमाणानामेषां दानेन कथं स्वर्गो भवेदिति शङ्कायां तत्परिहारार्थं प्रवृत्तेनानेन वचनेन यावन्ति दातव्यत्वेनाभिमतानि पुराणानि तावतां प्रामाण्यसमर्थनमेव कर्तुं न्याय्यम्; न तु तन्मध्ये कतिपयानाम्; तथा सति अप्रमाणानामेषामुक्तदानविधिर्विरुध्येत, तस्मात्परिहृतमेतत् यत्तावदुक्तमपि इति ।

यदप्युक्तम्— प्रत्यक्षश्रुतिविरोधादिति, तदपि तुच्छम्; तथाहि ब्रह्मनारायणयोरुत्पत्तिवर्णनं हि प्रत्यक्षश्रुतिविरुद्धमि-

त्वभिमान ; स एव भ्रममूलः । अथर्वशिरायाम् 'स-र्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इति ब्रह्मविष्णुरुद्राणां शिवादुत्पत्तिश्रवणादुदाहृतश्रुतिविरोधे विष्णुपुराणानामपि तुल्ये कथमेकत्र तदुद्भावनम्? न च 'नारायणाद्रुद्रो जायते' इति श्रुत्या कार्यत्वेनावगते रुद्रे श्रुत्यन्तरेण श्रूयमाणमपि ब्रह्मनारायणकारणत्वम्, 'आत्मन आकाशः संभूतः' इति श्रुत्या कार्यत्वेनावगते भूताकाशे 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' इति श्रुत्या प्रतिपादितं जगत्कारणत्वमिवान्वेतुमनर्हत्वात्तदन्तर्यामिणि परमात्मनि पर्यवस्यतीति न विष्णुपुराणस्य श्रुतिविरोध इति वाच्यम् ; वैपरीत्यस्यापि सुवचत्वात्—अथर्वशिरायां कार्यत्वेन श्रुते विष्णौ श्रूयमाणं जगत्कारणत्वं तत्रान्वयमलभमानं सत्तदन्तर्यामिणि परमशिवे पर्यवस्यतीति । वस्तुतस्तु न कस्यापि पुराणस्य श्रुतिविरोधः ; गुणमूर्तीनामन्योन्यस्मादुत्पत्तिमभिप्रेत्य 'नारायणाद्ब्रह्म' इत्यादिश्रुतयः, परमशिवादुत्पत्तिमभिप्रेत्य 'सर्वमिदम्' इत्यादिश्रुतयः, इति सविस्तरं व्यवस्थापितमस्मदी-

क्षितेः शिवार्कमणिदीपिकादिषु ॥

यच्चोक्तम्— स्वव्याघातादप्रामाण्यमिति, तदप्येतेनैव निराकृतम्, नारायणाद्रुद्रोत्पत्तिः गुणिरुद्रविषया, त्रिमूर्तीनामुत्पत्तिस्तु परमशिवविषयेति व्यवस्थाभिप्रायकतया स्वव्याघातगन्धस्याप्यभावात् । यच्चोक्तम्—स्वोक्तार्थस्य प्रमाणत्वाभिमतपुराणान्तरानुगृहीतत्वादिति, तदपि तुच्छम् ; शिवपुराणप्रतिपाद्यस्य शिवे ब्रह्मनारायणजनकत्वस्य तदुपास्यत्वस्य च परैः केवलमसूयितव्यस्य सर्वसंप्रतिपन्ने महाभारत एव 'योऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम् । वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः' इति 'यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः । अर्चयध्वं सदा लिङ्गं तस्मात्पूज्यतरो हि कः' इत्यादिना प्रपञ्चितत्वात् । अपि च भवदभिमते पाद्मे शिवराघवसंवादे गारुडे शिवरहस्यादौ च शिवपुराणोक्तार्थानां सविस्तरतया प्रतिपादनाच्च ॥

यच्चोक्तम्— 'पुराणसंहितां दिव्यां लिङ्गमाहात्म्यसंयुताम्' इति विशेषनिप्रश्नोपक्रमेण प्रवृत्ततया लिङ्गमाहात्म्ये आग्रहवत्त्वादप्रामाण्यं लैङ्गस्येति, तदपि न युक्तम् ; न हि शब्दानां तात्पर्यादन्य आग्रहो नामास्ति, तात्पर्यं च मूर्धाभिषिक्तं प्रामाण्यनिदानमिति कथमप्रामाण्ये विरुद्धो

हेतुरुपन्यस्तः ? प्रत्युत, यत्राग्रहो नास्ति तत्प्रमाणान्तरेण बाध्येतापि, यत्र त्वाग्रहोऽस्ति न तत्सर्वथा बाध्यत अन्ततो विकल्प वानुभवेत् । न च माहात्म्यशब्दवाच्यप्रशंसायामाग्रहेऽपि तद्घटके ब्रह्मनारायणजनकत्वादौ न प्रमाणमिति वाच्यम्, प्रशंसामात्रस्य तैरपि ज्ञाततया तद्घटकांश एव तेषां जिज्ञासायां तदुत्तरत्वेन प्रवृत्तस्य पुराणस्य तत्रैव तात्पर्यवत्त्वेन प्रमाणत्वात् । न च न ब्रूमस्तात्पर्याभावादिति, किं तु लिङ्गमाहात्म्यशुश्रूषुभिः पृष्टे 'न बुद्धिभेदं जनयेत्' इति न्यायेन तत्त्वमाच्छाद्य तद्बुद्ध्यनुसारेणैव प्रवृत्ततया प्रशंसामात्रे तात्पर्यमिति न वाच्यार्थे प्रामाण्यमिति वाच्यम्, तत्त्वव्युत्पादनार्थं प्रवृत्तेषु पुराणेष्वप्रतिपन्नतत्त्वेन प्रष्ट्रा अन्यथाबुद्ध्या पृष्टेऽपि, यथा मत्वा त्वया पृष्टं नैतदेव मन्तव्यम् इदं तु वस्तु तत्त्वम्— इति वक्तव्ये, तद्विहायान्यथाप्रवृत्तत्वाङ्गीकारे पुराणानां मोहशास्त्रत्वप्रसङ्गात् । वैपरीत्यस्यापि सुवचत्वाच्च— मैत्रेयेण जगतः किं कारणमिति सामान्यतः पृष्टेऽपि चिरपरिचयवशात्तत्स्वरूपाभिज्ञेनात एव विदिततदीयविष्णुभक्तिकेन पराशरेण 'न बुद्धिभेदम्' इति न्यायात्तद्बुद्ध्यनुसारेण 'विष्णोः सकाशादुद्भूतं जगत्' इत्याद्युक्तमिति । किं च, लैङ्गे तथात्वेऽपि श्रीशैवे

प्रयागे विद्यमानानामृषीणां सूतं प्रति प्रश्ने, 'त्वमदृष्टवशाद्-स्मद्दर्शनं समुपागत. । अकुर्वन्किमपि श्रेयो न वृथा गन्तुम-र्हसि । तस्माच्छ्रेष्ठतरं पुण्यं सत्कथाज्ञानसंहितम् । अपव-र्गफलैकान्तमनाचारबहिष्कृतम् ॥ जगतां सृष्टिसंहारस्थिति-हेतुप्रदर्शकम् । वेदान्तसारसर्वस्वं पुराणं श्रावयाशु नः' इति सामान्यनिष्ठप्रश्नोपक्रमेण प्रवृत्ते प्रामाण्यस्य त्वयापि वक्त-व्यत्वात्; भागवते प्रामाण्यस्य त्वयैव वक्तव्यत्वाच्च । तत्र हि सूतं प्रति ऋषीणां प्रश्ने— 'सूत जानासि भद्रं ते भ-गवान्सात्वतां पतिः । देवक्यां वसुदेवस्य जातो यस्य चिकी-र्षया ॥ तन्नः शुश्रूषमाणानामर्हस्यङ्गानि वर्णितुम्' इति विशे-षस्यैव विषयीकृतत्वात्, 'आपन्नः संसृतिं घोराम्' इत्यादि-भिश्चतुर्भि. श्लोकैस्तेषां भगवत्युत्कटाया भक्तेर्व्यक्तीकृतत्वाच्च ततोऽपि पूर्वमेव प्रबन्धु प्रार्थने 'पिबत भागवतं रसमाल-यम्' इति विशेषनिष्ठताया. प्रकटितत्वाच्च तदुपक्रमेण प्रवृत्ते प्रबन्धे दुष्परिहरमप्रामाण्यम् ॥

यदप्युक्तं कौर्मादिषु नष्टकोशत्वप्रसिद्धेरिति, तदप्यसा-रम्, तथा हि— येयं षट्सहस्रग्रन्थात्मिका ब्राह्मी सं-हिता प्रचरति सा न नष्टैव, मात्स्यवचनावगतसप्तदशस-हस्रीमध्ये ब्रह्मसंहितातिरिक्तो योऽयमेकादशसहस्रग्रन्थात्म-

को भाग स नष्ट इति चेत्, अस्तु को नेत्याह। न हि वयं तत्रत्यानि वचनान्युदाहराम । श्रूयमाणा तु या संहिता न तस्याः तदितरनाशप्रयुक्तं किंचिदतिशङ्काबीजमस्ति । तदितरभागस्य नष्टतया अनयापि संहितया तद्वदेव नष्टया भवितव्यम्, कस्यचिल्लोपे कस्यचिदलोपे च नियामकाभावात्, श्रूयमाणा तु केनचित्कल्पितेति स्यादनाश्वास इति चेत्, न, अप्रयोजकत्वात्— न हि केनचिल्लुप्तमिति सर्वेण लोप्तव्यम्, केनचिद्वा स्थितमिति सर्वेण स्थातव्यम्, न खलु ऐन्द्रादिव्याकरणनाशनिमित्तस्तिलमात्रोऽप्यनाश्वासः पाणिनीये तव वा मम वास्ति । किं च, एवं सति विष्णुपुराणेऽपि मात्स्यवचनादवगतत्रयोविंशतिसहस्रीमध्ये सप्तदशसहस्रीनाशप्रयुक्तो विद्यमानषट्सहस्र्यामनाश्वासो दुष्परिहर एवापतेत् ॥

यच्चोक्तम्— अतिविस्तृततया प्रक्षेपशङ्कास्पदत्वादिति, तदपि न विविच्य प्रश्नमपि क्षमते, तथाहि— किमतिविस्तृतत्वं नाम, किं स्वत एवाधिकग्रन्थत्वम्? किं वा कल्पसंख्यापेक्षयाधिकसंख्यावत्त्वेनोपलभ्यमानत्वम्? आद्ये सर्वपुराणसाधारण्यादिष्टसिद्धिः, द्वितीये त्वसिद्धं, यो हि कल्पग्रन्थसंख्या पुष्कला न लभ्यत इति नम्कोशोऽभ-

वह्न्य इत्युपालभ्यते, तं प्रत्येव कथमुक्तलक्षणमतिविस्तृतत्वमापादनीयम्; इदमन्यद्वा किंचिदस्त्वतिविस्तृतत्वम्, सर्वथापि तत्तत्किं वैष्णवपुराणेषु नास्ति? तत्किं व्यर्थैः पश्यन्त्यैः परान्भ्रमयसि? आस्तां तावदिदम् ॥

यदप्युक्तम्— विष्णुपुराणं प्रति शिवपुराणोक्तदोषसत्रकराहित्यात् तत्प्रमाणमिति, तत्र प्रतिज्ञांश एक· साधु., हेत्वंशस्तु न परीक्षाक्षम, तथाहि— यत्तावदुक्त वक्तृगुणरूपमात्रवैलक्षण्यमुपपादयितु पुलस्त्यवसिष्ठवरलब्धदेवतापारमार्थ्यज्ञानशालितया शैवपुराणेष्वपि स्वोत्पत्तौ अवतारपदप्रयोगसूचितमहिमशालितया च शिवपुराणवक्तृतामसचतुर्मुखापेक्षया पराशर उत्कृष्ट इति, तद्विचारयामः— वक्ता अत्र किं प्रबन्धप्रणेता कविरभिमत., उत कविना स्वग्रन्थे स्वप्रतिपाद्यार्थवक्तृत्वेन निबद्धः? आद्ये वैष्णवपुराणानां सत्त्वोद्रिक्तचतुर्मुखप्रणीतत्वस्य भवतैवोद्घोषितत्वेन पराशरोत्कर्षवर्णनस्य प्रकृतानुपयोगात्; द्वितीये शिवपुराणवक्तुस्तामसत्वदोष इति वादस्यासंगति स्पष्टैव, तत्र हि मत्स्यकूर्मशिवादयो वक्तृत्वेन निबद्धा इति । तथा च पराशरानुग्राहकपुलस्त्याद्युपास्यमत्स्यकूर्मादिवक्तृकेभ्यः शिवपुराणेभ्यस्तदुपासकोपासकपराशरवक्तृकत्वमेव विष्णुपुराणस्य म

इत्यवैलक्षण्यमिति वादः कस्य न हासाय । यच्च तस्य माहात्म्यं तदुत्पत्ताववतारपदप्रयोगात्साधितम्, तदपि तेनैव न्यतो द्रव्यम्; किमवतारपदं महतामुत्पत्तौ शक्तमित्यभिमानः, किं वा साधारण्येऽपि तत्रैव प्रयोग इति? नाद्यः, शक्तिग्राहककोशव्याकरणादेरभावात्, न द्वितीयः, असिद्धेः, 'सर्वे तेऽवतरिष्यन्ति ब्राह्मणाद्यासु योनिषु' इति गौतमशापदग्धाना पाषण्डानामुत्पत्तावपि अवतारपदप्रयोगात्; स तु लाक्षणिकः प्रयोग इति चेत्, न; वैपरीत्यस्यापि सुवचत्वात् । यत्तु द्वितीयं वैलक्षण्यं प्रत्यक्षश्रुत्यनुसारादिति, तदपि साधारणं सर्वपुराणानामिति प्रागेव प्रपञ्चितम् । यत्तु तृतीयं वैलक्षण्यं स्वव्याघाताभावादिति, तदेवासिद्धम; भागवत एव 'न ते गिरित्रासिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम्' इति प्रबन्धप्रतिपाद्यभगवदुत्कर्षविरोधिनोऽर्थस्य निबन्धनात् तत्त्वतो व्याघाताभावोऽपि उभयसाधारण इति तत्कथं वैलक्षण्यं भवेत् । यच्च चतुर्थं वैलक्षण्यं पुराणान्तरसंवादरूपम्, तदपि साधारणमित्यवोचाम । ये च पञ्चमषष्ठे वैलक्षण्ये सामान्यप्रश्नोपक्रमत्वानष्टकोशत्वरूपे, ते अपि भागासिद्धे अतिप्रसक्ते चेति प्रागेवोक्तम् । यच्च सप्तमं वैलक्षण्यं नातिविस्तृतमिति, तदपि

निर्वक्तुमेवाशक्यमित्युक्तमेव । तदलमनेन मशकमृगयासंरम्भेणेत्युपरम्यते । तदेवं सिद्धमेव प्रामाण्यं सर्वेषां पुराणानामिति प्रकृतमनुसरामः ॥

पार्वत्युवाच—

**शरीरार्धमहं शंभोर्येन प्राप्स्यामि केशव ।**
**तदिदानीं समाचक्ष्व स्तोत्रं शीघ्रफलप्रदम् ॥**

शरीरार्धमिति । शरीरस्यार्धमित्यर्थः । नन्वम्बया समांशरूपार्धस्यैव लिप्सितत्वेन तादृशार्धस्य 'अर्धं नपुंसकम्' इति *समासे अर्धशरीरमिति भवितव्यमिति* चेत्, वस्तुतः समाशरूपस्याप्यर्धस्य एकदेशत्वेन विवक्षितत्वात्षष्ठीसमासः । यद्वा समांशवाच्येवार्धशब्दः, न चैकदेशिसमासापत्तिः; भाष्यकारेण अर्धग्रामः ग्रामार्धमिति समांशवाचिन्येव रूपद्वयस्यापीष्टत्वात् अर्धग्रामादयः समानाधिकरणसमासेन, ग्रामार्धादय षष्ठीसमासेन च साधनीया इति व्यवस्थाप्य तत्सूत्रस्य प्रत्याख्यातत्वात् । केशवेति साभिप्रायसंबुद्धिः— त्वया हि शरीरार्धं लब्धम् अतस्त्वमेव तदुपायं जानासीति । शंकरनारायणात्मिका मूर्तिश्च महेश्वरस्य पञ्चविंशतिमूर्तिषु त्रयोदशी शिवागमेषु प्रसिद्धा । यथोक्तं वातुलशुद्धे तत्त्व-

भेदपटले— 'त्रयोदशी हरेरर्धमर्धनारी चतुर्दशम्' इति । स्तोत्रमिति । गुणिनिष्ठगुणाभिधानं स्तुतिः, तत्साधनीभूतशब्दमात्रं वा । 'दाम्नीशस—' इत्यादिना करणे ष्ट्रन्प्रत्ययः । तदाचक्ष्वेति । अधीष्टे लोट् ॥

नारायण उवाच—

**अस्ति गुह्यतमं गौरि नाम्नामष्टोत्तरं शतम् ।**
**शंभोरहं प्रवक्ष्यामि पठतां शीघ्रकामदम् ॥**

अस्तीति । वर्तमानव्यपदेशेनेदं द्योतयति— नेमानि नामानि मयेतः परं कल्पनीयानि, किं तु प्रागेव सिद्धान्यधुनापि वर्तन्त इति । गुह्यतमं संवरणीयतमम् । 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यप् । गुह्यतमत्वं च श्रुतिस्मृतिरहस्यार्थनिबन्धनरूपत्वात् । नाम्नामिति । ननु स्तोत्रमाचक्ष्वेति स्तुतिसाधनकथनाध्येषणे नाम्ना कीर्तनमयुक्तम्, नाम्नां यदृच्छाशब्दत्वेन मतभेदेन यान्यवाचकोभयस्वरूपान्यतरप्रवृत्तिनिमित्तकत्वादिति चेत्, सत्यं नामानि तादृशान्येव; शिवादिपदानि तु योगार्थप्रधानानि; नामव्यपदेशस्तु तत्प्रतिपाद्ययोगार्थानां संज्ञाशब्दप्रवृत्तिनिमित्तभूतसंज्ञिस्वरूपवदसाधारणत्वाभिप्राय । यद्यपि शिवादिश-

ब्देषु कानिचिन्नामान्यपि भवन्ति, तथापि तेषु विद्यमानो रूढ्यंशो न विवक्षितः, तेन स्तुतेरभावात्; न हि वाचकशब्दबाहुल्यमात्रमुत्कर्षः, घटादिसाधारण्यात्; परं तु स्तुतिपरेषु वाक्येषु विशदेषु सत्सु नामपदैरेव स्तुतिसाधनं रूढ्यर्थयोगार्थस्याप्यसाधारण्यख्यापनाय । प्रवक्ष्यामि, प्रथमं वक्ष्यामि । पठतामिति लिङ्गमविवक्षितम् । इत्युक्त्वोपदिदेशेति शेषः । यद्यपि चिच्छक्तिरूपाया अम्बायाः किमप्यविदितं नास्ति, नापि नित्यसिद्धमेकशरीरत्वं कर्मलभ्यम्, तथापि श्रोतॄणां विश्वासजननायाख्यायिकेयं निबद्धा ॥

'ऋषिच्छन्दोदैवताभिः परित्यक्तो भुजंगमः' इति मन्त्रशास्त्रवचनात्तत्रयं दर्शयति—

**नारायण ऋषिः । अनुष्टुप्छन्दः । सदाशिवो देवता ।**

**नारायण ऋषिरिति** । मन्त्रद्रष्टेत्यर्थः । अत एव प्रवक्ष्यामीति प्रथमवक्तृत्वमाविष्कृतम् । **अनुष्टुप्छन्द इति** । अष्टाक्षरपादघटितत्वात् । **सदाशिवो देवतेति** । मन्त्रप्रतिपाद्य इत्यर्थः । यद्यपि शिवपदेनोपक्रमात् सदाशिवादुत्तीर्णः षट्त्रिंशत्तत्त्वातीतस्वरूपः परमशिव एव प्रतिपाद्यः, यद्वा महेश्वर

एव प्रतिपाद्य, शरीरार्धप्राप्त्यर्थकस्तोत्रेण तदातुरेव स्तोतव्यत्वात्, अर्धनारीश्वरमूर्तेर्महेश्वरव्यूह एवान्तर्भावात् । यथोक्तं वातूलशुद्धे—'कर्मेशस्य सहस्रांशान्महेश्वरसमुद्भवः । महेश सकलं विद्यात्सृष्टिस्थितिलयात्मकम् ॥ पञ्चविंशतिभेदेन मूर्तीना पञ्चविंशतिः' इत्युपक्रम्य, 'त्रयोदशं हरेरर्धमर्धं नारी चतुर्दशम्' इति तन्मूर्तिषु परिगणनात् । तथापि शिवतत्त्वस्य निष्कलतया केवलमुमुक्षूपास्यतया फलाभिसंधिमदुपास्ययोर्महेश्वरसदाशिवयो केवलसकलान्महेश्वरात्सकलनिष्कलात्मकस्य सदाशिवस्याभ्यर्हिततया कार्यकारणयो महेश्वरपरमशिवयोर्धर्मेण स्तोतु सौलभ्याद्वतारमूर्तिप्रसादाय मूलमूर्त्युपासनमगवाद्य स एवात्र प्रतिपाद्य इति भाव. ॥

तस्य ध्यातव्यं रूपमाह—

**धवलवपुषमिन्दोर्मण्डले संनिविष्टं**
**भुजगवलयहारं भस्मदिग्धाङ्गमीशम् ।**
**हरिणपरशुपाणिं चारुचन्द्रार्धमौलिं**
**हृदयकमलमध्ये संततं चिन्तयामि ॥**

यद्यपि सदाशिवो दशभुजः, तथापि तस्य जपकाले वराभयमृगपरशुपाणित्वस्याप्युपदिष्टतया हरिणपरशुपदं वरा

भयगोरप्युपलक्षणम् । यथोक्तं कामिके— 'जपकाले तु मन्त्रज्ञ ध्येयो देवश्चतुर्भुज । वराभयपरश्वेणलमत्करसरोरुह.' इति। ध्यानकाले ध्यातव्यत्वेन विहिता अङ्गप्रत्यङ्गसाङ्गोपाङ्गरूपा येऽङ्गभेदा वातूलशुद्धोक्ता' ते चत्वारोऽप्यत्र प्रदर्शिताः। तथा हि— धवलवपुषमित्यनेन सर्वाङ्गग्रहणान्छिरोवक्त्रहृदयाख्यान्यङ्गानि वक्षःकण्ठादीनि प्रत्यङ्गानि दर्शितानि। 'शिरो वक्त्रं च हृदयमङ्गमित्यभिधीयते। वक्षः कण्ठ स्तनौ बाहू नाभिगुह्योदरं तथा॥ नेत्रनासास्यकर्णं च पाणिपादतलाङ्गुली। ऊरू जानू च जङ्घे च प्रत्यङ्गमिति कीर्तितम्' इति वातूलशुद्धवचनात् । हरिणपरशुपाणिमित्यनेन साङ्गं दर्शितम्— 'मूर्तीना गुणरूपं तु साङ्ग चेति प्रकीर्तितम्' इति प्रतिज्ञाय, के ते गुणा इत्याकाङ्क्षायाम् 'त्रिगुणा शक्तिपशपाशभेदोऽनुमदस्तथा। ऋद्धिर्माया विवर्णश्च नाद' संहृतिरेव च॥ एते दशगुणा प्रोक्तास्तेषा लक्षणमुच्यते' इति गुणाननुक्रम्य 'त्रैगुण्यं शूलमित्युक्त शक्तिः परशुरिष्यते' इत्यादिना 'एते वै गुणरूपाश्च साङ्ग चेति प्रकीर्तिताः' इति वातूलशुद्धेऽभिधानात् । भुजगवलयहारमित्यादिभिश्च रुपाङ्ग दर्शितम्। 'यज्ञोपवीतमालाश्च गन्धमाभरणं तथा। आसनावरणे चैव उपाङ्गमिति कीर्तितम्' इति वातूलशुद्धव-

चनात् । भुजगवलय इत्यनेन हाररूपमालायाः, भस्मदिग्धाङ्गमित्यनेन गन्धपदप्रतिपाद्याङ्गरागस्य, इन्दोर्मण्डले इत्यनेनासनस्य, चारुचन्द्रार्ध इत्यनेन भूषणस्य च निबद्धत्वात् ॥

**शिवो महेश्वरः शंभुः पिनाकी शशिशेखरः ।**
**वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥**

एवं स्तोत्रप्रतिपाद्यं सदाशिवं मूलभूतपरमशिवाभेदेन स्तोतुं शिवनाम्नोपक्रमते— शिव इति । शिवशब्दः शोभनवचनः, 'स्वश्रेयसं शिवं भद्रम्' इत्यमरकोशात् । शिवाः शोभनाः सर्वज्ञत्वादयो गुणा अस्य सन्तीति शिवः । अर्श आदेराकृतिगणत्वादच्प्रत्ययः । इत्वलंकारविधया अभेदोपचाराद्वा । सर्वज्ञतादयश्चाङ्गाव्ययभेदेन द्विविधाः शिवपुराणागमप्रसिद्धाः । यथोक्तम्— 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे' इति । यद्यपि परमशिवस्य निष्कलत्वाद्गुणा न भवन्ति 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति श्रुतेः, वातूलशुद्धे च 'शिवतत्त्वं महासेन नि-

ष्कलं त्विति कीर्तितम्' इति वचनाच; तथापि 'सूक्ष्मर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणात् । योगिनामुपकाराय स्वेच्छया गृह्वते तनूम्' इति, 'तथैव योगिनां चापि ज्ञानिनां मन्त्रिणामपि । जपपूजानिमित्ताय निष्कलं सकलं भवेत्' इति च तत्रैव वातूलशुद्धे वचनात्, सदाशिवपरापेक्षिकल्पितान्गुणानादाय तथा व्यपदेशः। अथवा शिवः स्वयमेव शिव' शोभनत्वात्; शोभनत्वं च सर्वजीववृत्त्याणवकार्मणमायेयाख्यानादिमलत्रयाभावरूपनैर्मल्यलक्षणं शुद्धत्वम् । अणुर्जीवः तस्यानादिर्जीवतापादकोऽविद्यासंबन्धः आणवं मलम्, अनादिकर्मफलवासनारूपं कार्मणं मलम्, अस्ति प्रकाशते इति व्यवहारसामग्र्यां सत्यां नास्ति न प्रकाशते इति व्यवहारयोग्यस्वरूपमावरणं मायेयं मलमिति सकलशिवागमप्रसिद्धम्; तादृशमलत्रयाभावश्च परमात्मन्यकर्मवश्ये सर्वज्ञे संभवति इति निर्मलता । यथोक्तं वायुसंहितायाम्— 'अथवाशेषकल्याणगुणैकघन ईश्वरः । शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभि.' इति । तथा 'अनादिमलसंश्लेषप्रागभावात्स्वभावतः । अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते' इति च । तथा तत्रैव प्रदेशान्तरेऽपि 'विशुद्धिः शिवता स्वतः' इति । वातूलशुद्धेऽप्युक्तम्

'शुद्धत्वात्तु शिव प्रोक्त' इति । यद्वा शेतेऽस्मिन्सर्वमिति शिव । सर्वकारणीभूतचिच्छक्तेरप्याधारतया परमशिवस्यैव जगदाधारत्वात् । सर्वनिघृण्टरिश्वलश्वशिवपद्मग्रहे ष्वा अस्वतन्त्रे' इति स्वतन्त्रपदवाच्यकर्तृभिन्नेऽधिकरणे औणादिकनिपातनात्साधु । यो योनिं योनिमधितिष्ठत्येक यस्मिन्निद स च वि चैति विश्व तमीशान वरद देवमीड्य निचाय्येमा शान्तिमत्यन्तमेति' इति श्रुते । अथवा शाम्यतीति शिव 'शिवादयश्च' इति जैनेन्द्रव्याकरणसूत्रेण कनि इत्वमलोपयोश्च रूपमिति सुभूतिचन्द्र, निर्विकार इत्यर्थ । 'निष्क्रिय निष्कल शान्तम्' 'त्रिलोचन नीलकण्ठ प्रशान्तम्' इति च श्रुते । अथवा वष्टीति शिव । 'वश कान्तौ' इति धातो पचाद्यचि पृषोदरादित्वाद्वर्णव्यत्यये अकारस्येकारादेशे च शिव इति रूपम्, 'हिसिधातो सिंहशब्दो वशकान्तौ शिव स्मृत । वर्णव्यत्ययत सिद्ध पश्यक कश्यपो यथा' इत्यभियुक्तोक्ते । तथा च इच्छाश्रय इत्यर्थ । यद्यपि 'कर्तरि कृत्' इत्यनुशासनात् कर्तृत्वस्य च धात्वर्थविषयकृत्याश्रयत्वरूपत्वात् प्रकृते पचाद्यच्प्रत्ययस्याश्रयार्थकत्वमलभ्यम्, तथापि ज्ञानादिगोचरकर्तृभावेन ज्ञानादिबोधकधातूत्तरकर्तृप्रत्ययाना जानातीच्छति यतते इत्या-

दिषु आश्रयलक्षकतया सप्रतिपन्नत्वेन इच्छाश्रयत्वपर्यव-सानात् । सा चेच्छा शिवस्य चिद्रूपाया पराशक्तेर्भेद एव, 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । वातूल शुद्धेऽपि— 'तच्छिवेऽपि पराशक्ति. सहस्रांशसमुद्भवा । पराशक्तेः सहस्रांशादादिशक्तिसमुद्भवः ॥ आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः । इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भव ॥ ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः' इत्यभिधानात् । 'शक्तिराज्ञापरा शैवी चिद्रूपा पारमेश्वरी । शिवेऽवतिष्ठत्यखिलं यया करणभूतया' इति, तथा 'तस्याङ्कमण्डलारूढा शक्तिरिच्छाह्वया परा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोरमा' इति च शिवपुराणवचनाच्च । परं तु पराशक्त्याश्रयस्य परमशिवस्य साक्षादेव तदाश्रयत्वे वक्तव्ये तदभेदात्कथंचित्समर्थनीयस्येच्छाशक्त्याश्रयत्वस्य कथनं सकलप्रपञ्चहेतुभूतायास्त्वेच्छाश्रयस्य तव मदभिलषितशरीरार्थप्रदाने को भार इति सूचनार्थम् । अथवा वष्टि लोकहितमिति शिवः, रूपसिद्धिः प्राग्वत्; 'मनेधयति यन्नित्यं सर्वार्थानामुपक्रमम् । शिवमिच्छन्मनुष्याणां तेन देवः शिवः स्मृतः' इति भारतोक्तेः । यद्वा शिवं मङ्गलं करोतीति शिवः, शिवशब्दात्तत्करोतीति ण्यन्तात्प-

चाद्यापि रूपम्; तथा च श्रुतिः—'सर्वमन्यत्परित्यज्य शिव एको ध्येयः शिवंकरः' इति । महाभारतेऽपि 'मम भवन्ति मे सर्वे दानवाश्चामराश्च ये । शिवोऽस्मि सर्वभूताना शिवत्व तेन मे सुराः' इति । तदयमत्र संग्रहश्लोकः— शेवेऽस्मिञ्जगदीहते दिशति च श्रेयः प्रजानामसौ शान्ति याति समस्तमङ्गलगुणग्रामैकसीमायते । इच्छाशक्तिमुपैति निर्मलतरत्वमास्ते प्रकृत्येति च व्याचष्टे शिवनाम यस्य विभवं तस्मै परस्मै नम इति । एवं चात्र यावन्तोऽर्था दर्शितास्तावत्स्वपि तात्पर्यं शिवपदस्यास्ति; स्तुत्यर्थं प्रवृत्ते तस्मिन्बहुप्रकारस्तुतिकोटीकारस्य नानाकथाश्लेषकाव्यस्थपदेषु तत्तत्कथोचितार्थकोटीकारस्येव गुणत्वात् । एवमेतेषां योगार्थानां रूढिमच्छब्देन प्रतिपादनं रूढियोगार्थानामसाधारण्यख्यापनाभिप्रायकमित्युक्तमेव । केवलयौगिकानां भक्तवत्सलादिपदानामपि रूढनामसंवलितपाठबलादेव तद्योगार्थासाधारण्याभिप्रायकत्वं स्फुटमेव । तथा चात्र साधारणयोगार्थपराणां भक्तवत्सलादिपदानामसाधारण्याभिप्रायस्य यद्यप्यन्येऽपि भक्तवत्सलाः सन्ति, तथापि ते न शिववद्भक्तवत्सलाः, अस्य हि वात्सल्यमन्यादृशमिति दृष्टया समर्थने 'भेदकातिशयोक्तिः स्यात्तस्यैवान्यत्ववर्णनम्' इत्युक्तलक्षणा भेदकातिशयो-

क्तिः ; भक्तवात्सल्यं शिवस्यैवास्ति अन्यस्य तु कस्यापि नास्ति इत्यपलापदृष्टया समर्थने 'योगेऽप्ययोगः संबन्धातिशयोक्तिरितीर्यते' इत्युक्तलक्षणा संबन्धातिशयोक्तिश्च व्यज्यत इति दिक्। सर्वेष्वपि नामसु वक्तृरस्याद्भुतादिरसस्य परमेश्वरविषयरतिभावाङ्गतया रसवदलंकारो वेदितव्यः। तथास्मिन्नामनि श्लेषालंकार एक, 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पदः' इति तल्लक्षणात्; स च प्रथमः; वर्ण्यैकविषयत्वात्। तथा शेते अस्मिञ्जगदिति शिवः इति व्युत्पत्तौ प्रसिद्धं यज्जगदतिविस्तृतं तदप्यस्मिञ्शेते असंबाधेन वर्तते इत्यर्थादधिकालंकार., 'पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम्' इति तल्लक्षणात्। अत एव तादृशव्यापकताशालित्वनिबन्धनाद्भुतरसस्य परमेश्वरविषयरतिभावाङ्गतया रसवदलंकारः, 'रसस्य पराङ्गत्वे रसवदलंकारः' इति तल्लक्षणात्। शिवंकर इत्यर्थे कल्याणवाचिनः शिवशब्दस्य तज्जनके लक्षणया प्रयोग इति समर्थने हेत्वलंकारः, 'हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते' इति तल्लक्षणात्। न च शिवशब्दस्य मङ्गलवाचिनो लक्षणया तद्धेतौ प्रयोगे नपुंसकत्वैव स्यात् न तु पुलिङ्गतेति वाच्यम्; लाक्षणिकानां शक्यलिङ्गनियमासिद्धेः, गङ्गायां घोष इत्यादिषु कचित्तत्सद्भावेऽपि गुणवचनानां म-

संकर इति । इह तु अतेऽस्मिञ्छिव इति संसर्गे रसवदलंकारः, अस्मिन्संसर्गे संसर्गान्तरे च व्यासज्य वर्तते श्लेषः, संसर्गान्तर एव वर्तते हेत्वलंकार इति वैषम्यम् । तथाप्येकवाचकानुप्रवेशसंकरोऽव्याहत एव । तथाहि— उदाहृतश्लोकेऽपि संकीर्यमाणालंकारयोरधिकरणीभूतसंसर्गैक्यं नोक्तसंकरप्रयोजकम्, तथाहि सति एकवाच्यानुप्रवेशसंकरः सामानाधिकरण्यसंकर इत्यादिरेव व्यपदेशः स्यात्, न तु वाचकैक्यघटितोऽपि । किं तु संकीर्यमाणालंकारयोरधिकरणीभूतसंसर्गोपस्थापकैक्यमेवोक्तसंकरप्रयोजकम्, तस्यैव एकवाचकानुप्रवेशशब्दार्थानुगमात् । तच्च क्वचित्संसर्गैक्ये भवति क्वचित्तद्भेद इत्यन्यदेतत् । प्रकृते एकस्मिञ्छिवशब्दरूपे वाचके तदुपस्थाप्यसंसर्गद्वयाश्रयतया श्लेषः तदुपस्थाप्यैकसंसर्गनिष्ठतया रसवदलंकारश्चानुप्रविष्टाविति युक्त एव तयोरेकवाचकानुप्रवेशः । असांशयिकस्तु रसवदलंकाराधिकालंकारयोरेकवाचकानुप्रवेशसंकर इत्यलं प्रसक्तानुप्रसक्त्या । इदं च श्रुतिसिद्धं नाम, 'नमः शिवाय च शिवतराय च' 'तस्मात्सर्वगतः शिवः' 'न सन्न चासच्छिव एव केवल' इत्यादिबहुश्रुतिप्रसिद्धेः । माहात्म्यं चास्य श्रुतिस्मृतिप्रसिद्धम्, 'अपि वा यश्चण्डालः शिव इति

त्वर्थलक्षणाया सर्वेषां पुयोगलक्षणायां च तादृशनियमाभावस्य सर्वसंप्रतिपन्नत्वात् । न च पुयोगस्थले न प्रकृतौ लक्षणा, किं तु स्त्रीप्रत्यय एव प्रकृत्यर्थसंबन्धिनीं स्त्रियमाहेति वाच्यम् ; तथा सति 'तस्येदम्' इति तद्धिते नाम्राप्ते आरभ्यमाणेन ङीषा तस्य बाधात्कदापि प्राप्नोति तद्धितान्तरूपामिद्धिप्रसङ्गात् । अतः प्रकृतिरेव यदा तत्साहचर्यात्तत्संबन्धिन्या स्त्रियां लक्षणया प्रवर्तते, तदा स्त्रीलिङ्गायास्तस्याः स्यधिकारविहितस्वार्थिको ङीषिति सिद्धान्तः । स्पष्टं चैतत्प्रतिपादितं पुंयोगसूत्रे महाभाष्ये— अतस्मिंस्तच्छब्दश्चतुर्धा भवति, तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यादित्यादिना । एतच्च पदमञ्जर्यादावपि स्पष्टम् । त्रयाणां चैतेषां संसृष्टिः । यद्वा एकवाचकानुप्रवेशलक्षणः संकरः । यद्यप्येकस्मिन्नेव संसर्गे लक्षणद्वययोगात् यत्रालंकारद्वयम् तत्रैव तयोरेकवाचकानुप्रवेशः संकरः । यथा 'विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् । विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हृतचित्तस्तत्र भैमीवनेन' इति । अत्र हि स्फटिकालवालानां चन्द्रिकासंबन्धप्रयुक्तनिष्यन्दवर्णने मणिमहत्त्ववर्णनरूपोदात्तालंकारस्य असंबन्धे संबन्धरूपाया अतिशयोक्तेश्च सङ्गेन तयोरेकवाचकानुप्रवेशलक्षणः

संकर इति । इह तु शेतेऽस्मिन्निशव इति संसर्गे रसवदलंकारः, अस्मिन्संसर्गे संसर्गान्तरे च व्यासज्य वर्तते श्लेषः, संसर्गान्तर एव वर्तते हेत्वलंकार इति वैषम्यम् । तथाप्येकवाचकानुप्रवेशसंकरोऽव्याहत एव । तथाहि— उदाहृतश्लोकेऽपि संकीर्यमाणालंकारयोरधिकरणीभूतसंसर्गैक्यं नोक्तसंकरप्रयोजकम् , तथाहि सति एकवाक्यानुप्रवेशसंकरः सामानाधिकरण्यसंकर इत्यादिरेव व्यपदेशः स्यात् , न तु वाचकैक्यघटितोऽपि । किं तु संकीर्यमाणालंकारयोरधिकरणीभूतसंसर्गोपस्थापकैक्यमेवोक्तसंकरप्रयोजकम् , तस्यैव एकवाचकानुप्रवेशशब्दार्थानुगमात् । तच्च कचित्संसर्गैक्ये भवति कचित्तद्भेद इत्यन्यदेतत् । प्रकृते एकस्मिन्निशवशब्दरूपे वाचके तदुपस्थाप्यसंसर्गद्वयाश्रयतया श्लेषः तदुपस्थाप्यैकसंसर्गनिष्ठतया रसवदलंकारश्चानुप्रविष्टाविति युक्त एव तयोरेकवाचकानुप्रवेशः । अत्राश्रयिकस्तु रसवदलंकाराधिकालंकारयोरेकवाचकानुप्रवेशसंकर इत्यलं प्रसक्तानुप्रसक्त्या । इदं च श्रुतिसिद्धं नाम, 'नमः शिवाय च शिवतराय च' 'तस्मात्सर्वगतः शिवः' 'न सन्न चासच्छिव एव केवलः' इत्यादिबहुश्रुतिप्रसिद्धेः । माहात्म्यं चास्य श्रुतिस्मृतिप्रसिद्धम् , 'अपि वा यश्चण्डालः शिव इति

वाचं वदेत्तेन सह संवसेत्तेन सह संवदेत्तेन सह भुञ्जीत ' इति श्रुतेः 'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् । पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः' 'महापातकविच्छित्त्यै शिव इत्यक्षरद्वयम् । अलं नमस्क्रियायुक्तो मुक्तये कल्पते नरः.' इत्यादिस्मृतेश्च । अत एव शिवनाम्नि शिवनामघटिते श्रीमत्पञ्चाक्षरे च जीवरत्नव्यवहारः शिवागमवेदिनाम् । 'तस्मात्सह तया शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी सिद्धि-र्नेतरेषामिति श्रुतिः' इति शिवपुराणोक्तरीत्या सकलश्रेयः-कारणभूतसर्वतत्त्वोत्तीर्णश्रीसाम्बशिवप्रतिपादकतया च अस्य नाम्नः सर्वातिशायित्वमित्यभियुक्ताः ॥ १ ॥

एवं स्तोत्रप्रतिपाद्यं सदाशिवं कारणभूतपरमशिवाभेदेन स्तुत्वा कार्यभूतमहेश्वराभेदेनापि स्तौति— महेश्वर इति । 'ईश ऐश्वर्ये' इति धातोः 'स्थेशभासपिसकसो वरच्' इति कर्तरि वरच्प्रत्यये ईश्वर महांश्चासावीश्वर इति विग्रहे 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासः। महत्त्वं चे-श्वरे समभिव्याहृतधातूपात्तेशितृत्वद्वारकमसंकुचितविषयत्व-रूपम्, स्वर्गादिषु किंचिदीशितृत्वयोगादीश्वरत्वं हि इन्द्रादीना-मप्यस्ति; यदादाय षड्विंशब्राह्मणे उत्पातशान्तिप्रकरणे इन्द्र-

यमादिषु 'ईश्वराय स्वाहा' इति मन्त्रः प्रवृत्तः; शिवस्तु महेश्वरः तेषामपीश्वरत्वात्, 'ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इति श्रुतेः; 'सेन्द्रादिषु च देवेषु तस्य त्वैश्वर्यमुच्यते' इति भारतवचनाच्च। एतदभिप्रायमेव च 'महेश्वरश्च भूतानां महतामीश्वरश्च सः' इति भारतवचनम्। महतः प्राणिन इन्द्रादीन्प्रत्यपि यदस्येशितृत्वं वर्तते, इदमेव एतदीयेशितृत्वस्य महत्त्वमिति; न तु महतामीश्वरो महेश्वर इति षष्ठीतत्पुरुषव्युत्पत्त्यन्तरप्रदर्शनपरम्, तथा सति व्यधिकरणत्वादुत्तरपदस्य 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वाभावप्रसङ्गात्। यद्वा ईशितृत्वे महत्त्वम् इतरजनाज्ञया अप्रवर्तनीयेष्वपि कार्येषु प्रवर्तकत्वम्, अङ्गेषु जघन्यस्य गुह्यस्य पूजने केनापि प्रवर्तयितुमशक्ये सर्वलोकप्रवर्तनात्। यथोक्तं भारते—'सत्येन ब्रह्मचर्येण लिङ्गमस्य यथास्थितम्। समर्चयन्ति लोकाश्च महेश्वर इति स्मृतः' इति; अयमर्थः—यथास्थितं लिङ्गरूपेणैव स्थितम्, न तु रूपान्तरेण तिरोहितमपि; एवंभूतं लिङ्गं लोकाः समर्चयन्ति, तच्च न यथाकथंचिदवज्ञया, किं तु सत्येन ब्रह्मचर्येण सत्यब्रह्मचर्यादिसकलनियमोपेतया महत्या भक्त्या पूजयन्ति यतः, अतः इतरदेवतासाध्यकार्यप्रवर्तकतया सर्वत्राप्रति-

हृतत्वात् महदीशितृत्वमस्येति महेश्वर इति स्मृतः इति । एतदृष्ट्यैव आनुशासनिकेऽप्यभिहितम्— 'यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः । अर्चयध्वे सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि कः' इति । अयं च महेश्वरः सांख्यानामेव मतभेदेन पुरुषपदवाच्यं पञ्चविंशतितमं तत्त्वम्, ततोऽप्युत्तीर्णं षड्विंशतितमं तत्त्वं वा; उभयथापि श्रुतेः स्मृतेश्च । तत्र प्रथमे तावत् 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतिः; स्मृतिश्च शिवपुराणे वायवीयसंहितायाम्— 'अथवा निर्गुणं तत्त्वं मायेयमिदमव्ययम् । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ मायाविक्षोभकोऽनन्तो महेश्वरसमन्वयात्' इति । योगपातञ्जलेऽपि—'क्लेशकर्मविपाकाशयैरपरामृष्टपुरुषविशेष ईश्वरः' इति पुरुषे ईश्वरपदप्रयोगाच्च । द्वितीयेऽपि वाजसनेयके श्रूयते— 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति; अस्यार्थः— यः ईश्वरः वेदादौ स्वरः प्रोक्तः वेदादौ विद्यमानः स्वरः प्रणवः 'प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिताः' इति स्मरणात्, स प्रोक्तः 'वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्' इति वचनात् । अत एवाथर्वशिरसि शिवनाम्नां प्रणववाच-

कत्वेन निर्वचनम्, 'तस्य वाचकः प्रणवः' इति योगसूत्रं च प्रणवस्य शिववाचकत्वे प्रमाणम् । वेदान्ते च प्रतिष्ठितः तात्पर्यविश्रान्तिभूमितया स्थितः, वेदान्तसमधिगम्य इति यावत्; 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'ऋचोऽक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः' इति श्रुतेः । तस्य प्रकृतिलीनस्य लीनवद्दीनः भोक्त्रर्थः । यो हि यां भुङ्क्ते स तदेकरसत्वात्तस्यामेव लीन इति व्यवह्रियते, एवंभूतस्य पुरुषस्यापि यः परः प्रेरकतयोत्कृष्टः, संबन्धसामान्यविवक्षया षष्ठी, स महेश्वर इति । तथा च वायुसंहितायाम्— 'त्रयोविंशतितत्त्वेभ्यः परा प्रकृतिरुच्यते । प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् ॥ यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः । वेदैकवेद्ययाथार्थ्याद्वेदान्ते च प्रतिष्ठितः ॥ स एव प्रकृतौ लीनो भोक्तायं प्रकृतेर्यतः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ तदधीनप्रवृत्तित्वात्प्रकृतेः पुरुषस्य च' इति । यद्वा, त्रिमूर्तितिरोधायकत्वान्महेश्वरः; सन्ति हि पञ्च कृत्यानि सृष्टिस्थित्युपसंहारतिरोधानानुग्रहरूपाणि सकलतन्त्रपुराणप्रसिद्धानि; तान्येव ब्रह्मादिपदप्रवृत्तिनिमित्तानीति व्यक्तं शिवपुराणे; यथोक्तम्— 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः

परमात्मेति गुरुयत ॥ नामाष्टकमिदं तस्य प्रतिपादकमी शितुः । आद्यं तु पञ्चकं तत्र शान्त्यतीताद्यनुक्रमात् ॥ सज्ञा सदाशिवादीनां पञ्चोपाधिपरिग्रहात्' इति । तदर्थ लाभप्रकारस्तु 'अशू व्याप्तौ' इति धातोरन्तर्भावितण्यर्थो दाशुत्वोपाधिकादाशु व्यापयति स्वस्मिन्नन्तर्भावयति त्रिमूर्ती रित्यर्थे 'अश्नोतेराशुकर्मणि वरट्च' इत्युणादिसूत्रेण चकारा दुपधाया ईत्वविधायिना वरट्प्रत्ययेन ईश्वर इति रूपम् । म हत्पदं च सकलजगदुपसंहारकसंहाररुद्राद्विशेष व्यापयि-तुम् । व्याप्तिश्च मरणमित्यागमेषु प्रसिद्धम्, 'गुरोर्व्याप्तिदिन चैव' इत्यादिना तन्त्रराजादिषु प्रयोगात् । तन्मूलं च व्या-प्तस्यात्मनः परिच्छेदधीहेतुशरीराद्यवच्छेदकनाशो मरणम्, तस्मिन्सत्यात्मनो व्याप्तिरप्रतिबद्धा परमात्मनि घटाद्यवच्छेद कनाशे तदवच्छिन्नाकाशस्येव महाकाश इति । एवं च त्रिमू र्त्युपसंहाररूपतुरीयकृत्यसाधक इति फलितम् । अस्य च महेश्वरस्य व्यूहः पञ्चविंशतिमूर्त्यात्मक इति प्रागेव वातूल शुद्धवचनमुदाहृतम् । अस्य च समष्टयभिमानिनो मूर्तिरा युधान्याभरणानि च तत्रैव दर्शितानि । यथा— 'नाना रूपधरो देवो नानाभेदसमन्वितः । नानाचिह्नसमोपेतो ना-नालीलापरो हरः ॥ जटामकुटसंयुक्तमेकवक्त्रं त्रिणेत्रकम् ।

सर्वाभरणसंयुक्तमेवं पद्मासने स्थितम् ॥ वरदाभयहस्तं च मृगीपरशुधारकम् । इदं रूपं महेशस्य रूपभेदमथो शृणु' इति । अत्रेदं तत्त्वम्— अस्ति त्रिमूर्तिजनिका तुरीया ब्रह्मणो मूर्तिः; 'ध्यायीतेशानं प्रध्यायितव्यम्' 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति श्रुतेः । स एव परमशिव इति पुराणागमेषु प्रसिद्धः । स च त्रिधा भिन्नः, परमशिवसदाशिवमहेश्वरभेदात् । तत्र परमशिव एकः, सदाशिवः पञ्चभेदः, शिवसादाख्यामूर्तसादाख्यमूर्तसादाख्यकर्तृसादाख्यकर्मसादाख्यभेदात्; महेश्वरः पञ्चविंशतिभेदः चन्द्रशेखरादिभेदात— इत्याहत्य परमशिवतत्त्वं त्रिव्यूहमेकत्रिंशद्भेदं च; सर्वं चैतद्वातूलशुद्धे तत्त्वभेदपटले प्रथमे प्रपञ्चितम् । तत्रायं संग्रहश्लोकः— 'शिवमेकं विजानीयात्सादाख्यं पञ्चधा भवेत् । महेशस्तु महासेन पञ्चविंशतिभेदकः ॥ एतद्वै तत्त्वसंयुक्तमेकत्रिंशदिति स्मृतम्' इति; 'एवं तत्त्वं त्रिभेदं तु समासात्परिकीर्तितम्' इति च । तत्र महेश्वरस्य साक्षादेव त्रिमूर्तिजनकत्वं शिवागमेषु शिवपुराणेषु च प्रसिद्धम् । यथोक्तं वातूलशुद्धे— 'महेश्वरसहस्रांशाद्रुद्रदेवसमुद्भवः । महेश्वरस्य कोट्यंशाद्ब्रह्मविष्णुसमुद्भवः' इति । तथा पाद्मे शिवराघवसंवादे— 'य एकः

शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः । त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ॥ जाता सिसृक्षा तस्याथ वीक्ष्यात्मस्थं गुणत्रयम् । दक्षिणादसृजत्पुत्रं ब्रह्माणं वामतो हरिम् ॥ पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजत्प्रभु' इति। योगाचार्यस्तु भगवान्पतञ्जलि व्याला चार्यशब्दितः स्वप्रणीते वैद्यग्रन्थे जगत्सृष्टिकथनावसरे महेश्वराद्रुद्रस्य रुद्राद्विष्णोस्ततो ब्रह्मणश्चोत्पत्तिमाह, तदपि साक्षात्परंपरासाधारण्यात् 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति श्रुत्या न विरुध्यत एव । यथोक्तम्— 'पराच्छिवः शिवाच्छक्तिः शक्तेर्नादसमुद्भवः । नादाद्बिन्दूदयस्तस्मात्सदाशिवसमुद्भवः ॥ सदाशिवान्महेशस्य ततो रुद्रसमुद्भवः । रुद्राद्विष्णुस्ततो ब्रह्मा ततः सर्वमिदं जगत्' इति । परमशिवस्य तु वातूलशुद्धे एकत्वेन कीर्तितस्यापि 'अनुग्रहाय भक्तानां स्वेच्छया गृह्णते तनुम्' इति तत्रैव सूचिततया महाकामेश्वरादयो मूर्तयः काश्चिदतिरहस्याः सन्ति ताश्चोपदेशैकसमधिगम्या इति ग्रन्थे न लिख्यन्ते । संहाररुद्रव्यूहास्तु हरमृडभवाख्या वायुसंहितादिप्रसिद्धाः । अन्याश्च विशालाक्षप्रमुखरुद्रनीललोहिताद्यः तत्तत्पुराणप्रसिद्धाः; ताश्च यथायथममे दर्शयिष्यन्ते । इदं च श्रुतिप्रसिद्धं नाम, 'मायिनं तु महेश्वरम्'

'तमीश्वराणां परमं महेश्वरम्' 'यः परः स महेश्वरः' इत्यादिश्रुतेः ॥ २ ॥

एवं स्तोत्रप्रतिपाद्यं सदाशिवं तिरोधायकमहेश्वरमूर्त्यात्मनानुसंधाय क्रमप्राप्तसंहारकरुद्रमूर्त्यात्मनानुसंधत्ते— शंभुरिति । शमित्यव्ययं सुखवाचि, भवतिश्चान्तर्भावितण्यर्थः, शं सुखं भावयति उत्पादयतीति शंभुः; डुप्रकरणे 'मितद्र्वादिभ्य उपसंख्यानम्' इति कर्तरि डुप्रत्ययः, शिवंकर इत्यर्थः; 'शिव एको ध्येयः शिवंकरः' इति श्रुतेः । यद्वा, भवतिरयं प्राप्त्यर्थः, शं भवति प्राप्नोति इति शंभुः, प्राग्वदेव डुप्रत्ययः, आनन्दवानित्यर्थः, 'आनन्दं ब्रह्मणो रूपम्' इति श्रुतेः । यद्वा, शं सन् सुखस्वरूपः सन् भवति सत्ताश्रय इति शंभु, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । इदं च नाम सत्त्वप्राधान्यज्ञापकम्; यथा चेदं तथा सात्त्विक इति नामव्याख्यानावसरे वक्ष्यते । अत एवात्रत्यप्रथमव्याख्यानस्य शिवयतेः पचाद्यचि शिव इति शिवनामव्याख्यानभेदेन गतार्थतायामपि सत्त्वप्रधानतायां बहुसमाख्याप्रमाणोपन्यासपरतया न पौनरुक्त्यम् । यद्वा तत्तन्नामसु संभवदर्थवर्णनस्य ये पुनरुक्ता अर्थास्ते तत्र वात्र वा कचिद्विवक्षितव्या इत्यभिप्रायकत्वादपौनरुक्त्यम् । अत्र प्रथमव्या-

स्थानस्य संहाररुद्रपरत्वम्; अनादौ संसारचक्रे नानायोनिषु परिभ्रमतां जीवानां कतिपयकालविश्रान्तिरूपोपसंहारसुखप्रवर्तकत्वप्रदर्शनादुपपन्नम्, भिषक्कृतव्रणच्छेदो व्रणार्तानामिव शिवकृतोपसंहारः प्रजानां सुखावहत्वाद्दयाकृत्यमिति शिवपुराणवचनात् । यथोक्तं वायवीयसंहितायाम्— 'निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः । न किंचिदस्ति नैर्घृण्यं घृणैवात्र प्रयोजिका ' इति । तथा च महाभारते शान्तिपर्वणि त्रिमूर्त्यन्तर्गते रुद्रे शंभुपदप्रयोगः— 'यं विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ॥ तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते ' इति । इदं च श्रुतिप्रसिद्धं नाम; 'सर्वेश्वरः शंभुराकाशमध्ये ' इति ॥ ३ ॥

अथ क्रमप्राप्तविष्णुमूर्त्यात्मकतां सूचयितुं तत्कृत्यभूतजगद्रक्षाकर्तृत्वेनानुसंधत्ते— पिनाकीति । त्रिपुरदहनसमये शरानलज्वालया पिहितवान् नाकं पिनाक इति टीकासर्वस्वे; अपेः पिधानार्थस्यापि निपातानामनेकार्थतया प्रकृते पिधानकर्तृपरस्य 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया ' इति समासे 'वष्टि भागुरिः ' इत्यकारलोपे च रूपम् । यद्यपि कटाक्षमात्रेण त्रिपुरं दग्धम्, तथापि शर-

स्थकालाग्न्यादिप्रार्थनया मुक्तेन शरेण दग्धमेव त्रिपुरं पुनर्दग्धमिति पौराणिकोक्तकयोगार्थनिर्वाहः । यथोक्तं लिङ्गपुराणे— सोमश्च भगवान्विष्णुः कालाग्निर्वायुरेव च । शरे व्यवस्थिताः सर्वे देवमूचुः प्रणम्य तम् ॥ दग्धमप्यथ देवेश वीक्षणेन पुरत्रयम् । अस्मद्धितार्थं देवेश शरं मोक्तुमिहार्हसि ॥ अथ संसृज्य धनुषा ज्यां हसंस्त्रिपुरार्दनः । मुमोच बाणं विप्रेन्द्रा विकृष्याकर्णमीश्वरः ॥ तत्क्षणात्तत्पुनर्दग्धं त्रिपुरं तच्छरार्चिषा' इति । महाभारते उपमन्यूपाख्यानेऽप्युक्तम्— 'इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः। पिनाकमिति विख्यातं स च वै पन्नगो महान् ॥ सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बण' । ज्यावेष्टितमहाग्रीव. स्थितः पुरुषविग्रह. ॥ शरश्च सूर्यसंकाशो दृष्टः पाशुपताह्वय.। येन च त्रिपुरं दग्धं सर्वदेवमयः शरः' इति । स च तपस्यतः कण्वस्य शिर प्रदेशोद्भूताद्वल्मीकादुत्पन्नेन वेणुना शिवविष्णुसोमानुद्दिश्य ब्रह्मणा प्रणीतेषु त्रिषु चापेषु प्रथमः ; यथोक्तमुमामहेश्वरसंवादे— 'युगान्तरे महादेवि कण्वो नाम महामुनिः। स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे' इत्यारभ्य, 'पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः । तृतीयमवशेषेण गाण्डीवमभवद्धनुः । तच्च सोमाय निर्दिश्य ब्रह्मा

लोकं गतः पुनः' इत्यन्वेन । तद्वान्पिनाकीति प्रशंसायां मत्वर्थीय इनिः । प्रशंसा च— 'नमस्ते अस्तु धन्वने' 'अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे' 'या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः' 'अर्हन्बिभर्षि सायकानि धन्वा' इत्यादिश्रुतिप्रसिद्धवैभववत्त्वात् । अथवा, पाति रक्षति जगदिति पिनाकः, 'या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनु. । तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज' इति श्रुतेः ; 'पिनाकादयश्च' इत्यौणादिकनिपातनेन पातेरौणादिकाकप्रत्ययस्य नुगागमस्य इकारान्तादेशस्य च निपातनात्साधुः । तद्वान्पिनाकीति प्राग्वत् । इदं च श्रुतिप्रसिद्धं नाम, 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति ॥ ४ ॥

शशिशेखर इति । शशाकारो लाञ्छनविशेषः शशः, सोऽस्यास्तीति शशी, स शेखरो यस्येति तथोक्तः । अयं चन्द्रः परमेश्वरस्य ज्ञानरूप इति शिवागमे दर्शितम् । यथोक्तम्— 'ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम्' इति । तथा वराहपुराणेऽपि सेनान्यर्थं स्तुवतां देवानां वचनम्— 'जटास्वरूपेण समस्तसागराः कुलाचलाः सिंधुवहाश्च सर्वतः । शशी परिज्ञानमिदं तव स्थितं न देव पश्यन्ति कुदृष्टयो जनाः' इति । चन्द्रस्य च ज्ञानरूपत्वकीर्तनम्, 'सोमो

गौरी अधिश्रितः' इति श्रुत्या 'अहमग्निशिरोनिष्ठस्त्वं सोम-शिरसि स्थिता । अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम्' इति शिवपुराणवचनेन च चिच्छक्तिरूपगौरीशरीरतयावगमितत्वात्तत्तादात्म्याभिप्रायम्; एवंभूतचन्द्रशेखरत्वोक्त्या स्रष्टव्यजगदुपादानगोचरापरोक्षज्ञानसूचनेन स्रष्ट्याख्यं प्रथमं कृत्यं सूचितम् । अथवा सर्वजीवसमष्टिभूतसोमधारकत्वकीर्तनेन वा स्रष्टृत्वसूचनम् । तथात्वं च सोमस्य सर्वशरीरेषु विद्यमानः क्षेत्रज्ञ एव मूर्तामूर्ते द्वे रूपे बभार तस्यामूर्तं रूपं क्षेत्रज्ञः मूर्तं तु रूपं क्षीरोदमथनोद्भूतः सोम इति वराहपुराणे प्रजापालमहातपःसंवादे प्रपञ्चितम् । यथोक्तं तत्रैव— 'तस्मिंस्तु मथिते जातः पुनः सोमो महीपते । योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन्पुरुषः परः ॥ स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः' इति । यद्वा अनेन मृदुहृदयता सूच्यते; तथाहि— दक्षाध्वरेऽनपराधोऽपि चन्द्रः संभ्रमवशात्कुद्धेन वीरभद्रेण इतरैरपराधिभिः सह शिक्षित.; पश्चात्स्वानपराधितावेदनहृष्टेन परमेश्वरेणादण्ड्यदण्डनदोषशान्तये शिरसा धारित इत्यानुशासनिके उमामहेश्वरसंवादे दर्शितम् । यथोक्तम्— 'सोमस्तत्र मया देवि कुपितेन भयार्दितः । पश्यंश्चानपराधी सन्पादाङ्गुष्ठेन

वाहितः ॥ तथा विनिकृतेनाहं सामपूर्वं प्रसादितः । तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुरा प्रिये । तदा प्रभृति सोमं हि शिरसा धारयाम्यहम् । एवं मे पापहानिस्तु भवेदिति मतिर्मम' इति । इयं च महेश्वरमूर्तिषु प्रथमा मूर्तिः कर्मसादाख्यादुत्पन्ना, 'प्रथमं सोमधारी च' इति, तथा 'इन्दुधार्यादि षण्णां तु कर्मसादाख्यसंभव.' इति वातूलशुद्धवचनात् । इदं च सकलपुराणेतिहासप्रसिद्धं नाम ॥ ५ ॥

वामदेव इति । वामः सुन्दरः, 'मङ्गलायतनं देवं युवानमतिसुन्दरम् । ध्यायेत्कल्पतरोर्मूले सुखासीनं सहोमया' इत्यागमवचनात्; स चासौ देव इति कर्मधारयः । यद्वा वामो वक्रः लोकविलक्षणकपालधारणाद्याचारशाली, स चासौ देव इति प्राग्वत् । अथवा वामं लोकविलक्षणं यथा भवति तथा देवः क्रीडाशाली विस्पष्टपटुवद्वा कर्मधारयः । अथवा वामेन वामार्धेन वामार्धाभिमानिन्या चिच्छक्त्येति यावत्, देवः क्रीडाशाली इति, 'तृतीया तत्कृतार्थेन गुणवचनेन' इति तत्पुरुष., 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या शिवे श्रौतासीम्यस्य शक्तेः सकलकार्यनिर्वाहकत्वस्य शिवापृथग्भावस्य च

तिमायां प्रतिष्ठितम्' इति शिवपुराणवचनात् । एवं चास्या मूर्तेरम्बिकासमानरूपतया शिवपुराणागमेषु श्रवणात्प्राग्व्याख्यातं सौन्दर्यं लोकविलक्षणत्वं चानयापि दिशा समर्थितं भवति ॥ ६ ॥

विरूपाक्ष इति । विरूपाणि विरुद्धस्वरूपाणि लोकविरुद्धत्रित्वसंख्याविशिष्टानीति यावत्, एवंभूतान्यक्षीणि अस्येति बहुव्रीहि; 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । त्रिलोचन इत्यर्थः । तथा च श्रुति —'त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति । यद्वा, विरूपाणि लोकविलक्षणान्यक्षाणि इन्द्रियाणि चक्षुरादीनि वागादीनि च यस्य, स तथोक्तः । इन्द्रियाणीत्युपलक्षणं धातूनामपि, लोके हि आहंकारिकाणि भौतिकानि वा इन्द्रियाणि, भौतिकाश्च त्वगाद्या धातव, नैवं परमेश्वरस्य, 'निष्कलं निष्क्रियं शान्तम्' 'अपाणिपादम्— अश्रोत्रम्' इत्यादिश्रुते., 'अप्राकृतशरीरं तमतिमन्मथरूपिणम् । घृतरीतिघनीभूतसच्चिदानन्दविग्रहम्' इति शिवपुराणवचनात्, 'नास्य देहेऽस्ति रुधिरं न मांसं नास्थि किंचन । प्रतिबिम्बमिवाकाशे शक्रचापमिवाम्बरे ॥ ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपु ' इति

एवं तन्त्रात्मकं रूपमीश्वरस्य विचिन्तयेत्' इति । अत्र त्रिलोचन इति प्रथमव्याख्याने 'इच्छाज्ञानक्रियारूपविलमलोचनत्रयम्' इति शिवागमवचनाच्छक्तित्रयात्मकत्वं सूचितम् । द्वितीयव्याख्याने तु अप्राकृतविग्रहत्वं स्पष्टमेव । यस्त्वर्थ विरूपाणि सोमसूर्याग्निरूपतया विविधरूपाणि अक्षीणि यस्येति, स उत्तरत्र 'सोमसूर्याग्निलोचनः' इति नाम्ना वक्ष्यत इति नेह लिखितः । इदं च श्रुतिप्रसिद्धं नाम, 'ऊर्ध्वरेत विरूपाक्ष विश्वरूपाय वै नमः' 'विरूपाक्षोऽसि दन्ताञ्जि तस्मै विरूपाक्षाय दन्ताञ्जये' इति ॥ ७ ॥

कपर्दीति । 'पर्व पूर्तौ' इति धातोः संपदादित्वाद्भावे क्विपि 'राल्लोपः' इति वलोपे पर्शब्दः पूर्तिवाची; अन्तर्भावितण्यर्थात्तत एव धातोः कर्तरि वा क्विपि पूरणार्थः पर्शब्दः; कशब्दो जलवाची, 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः' इत्यमरकोशात् । कस्य पः जलप्रवाहः, स च गाङ्गो विवक्षितः, तेन दायति शुध्यति इत्यर्थे 'दैप् शोधने' इति धातोः 'सुपि स्थः' इत्यत्र सुपीति योगविभागात्सुप्युपपदे आतो धातोः कप्रत्ययो भवतीति कर्तरि कप्रत्यये कपर्द इति रूपम् । शुद्धिश्चात्र नैर्मल्यं न तु पावित्र्यम्; स्वतःपवित्रस्य तत्कृतपावित्र्यानपेक्षणात् । यथोक्तं रामायणे—

'पपात जाह्नवी पुण्या पुण्ये रुद्रस्य मूर्धनि' इति । यद्वा, कपः गङ्गाप्रवाह एव, तं दायति शोधयति, 'भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः' इति रामायणोक्तरीत्या पवित्रीकरोतीत्यर्थे अन्तर्भावितण्यर्थाद्दैपः कर्मण्युपपदे 'आतोऽनुपसर्गे कः' इति कः । अथ वा कपरं गङ्गाप्रवाहं ददाति भगीरथायेति वा कपर्दः, जटानां ग्रन्थिविशेषः, सोऽस्यास्तीति कपर्दी । अत्र प्रथमव्याख्याने गङ्गाधरत्वमात्रपर्यवसाने वक्ष्यमाणगङ्गाधरनाम्ना पौनरुक्त्यात्, तावानपि जलप्रवाहो मार्जनवज्जटावारिबिन्दुशुद्धिमात्रफलकोऽभूत्, न तु भूमौ निपपातेति पर्यवसानाद्गङ्गातिरोभावलक्षणो महिमा सूचितः । द्वितीये तु 'श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता । गङ्गा तारयते नृणामुभौ वंशौ विशेषतः' इत्यानुशासनिकवचनप्रतिपन्नस्य तावतोऽपि गङ्गापावित्र्यस्य भगवज्जटास्पर्शः कारणमित्युक्त्या 'एवंविधे कलियुगे दोषाणामेकशोधनम् । महादेवनमस्कारो ध्यानं दानमिति श्रुतिः' इति कौर्मे, 'अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेद्देवमीशानं स बाह्याभ्यन्तरः शुचिः' इति शिवधर्मे च प्रसिद्धं शिवस्य सर्वातिशायि पावनत्वं सूचितम् । तृतीयव्याख्याने कानां प्रवाहमेव पुनर्ददातीत्युक्त्या दूर्वापल्लवजलबिन्दुकणिकामात्र-

रूपतया तिरोभावितस्य जलस्य पुनस्तावत्प्रवाहरूपेणाविर्भावन कृतमित्यप्रतिहतस्वाच्छन्द्यलक्षणमैश्वर्य सूचितम् । इद च श्रुतिप्रसिद्ध नाम, 'नम कपर्दिने च व्युप्तकेशाय च' इति, तथा 'अय सोम कपर्दिने' इति च ॥ ८ ॥

नीललोहित इति । नीलश्चासौ लोहितश्चेति 'विशेषण विशेष्येण बहुलम्' इति समास । यद्यप्युभे अपि विशेषणे एव, तथापि विशेषणविशेष्यभावे कामचारान्नीलस्य विशेषण ताविवक्षया समास कृत, 'न हि भवति कृष्णतिला इति प्रयोक्तव्ये तिलकृष्णा इति' इति महाभाष्योक्ते द्रव्यगुणस निपाते द्रव्यस्य विशेष्यतानियमेऽपि गुणद्वयसनिपाते विशेषणविशेष्यभावे कामचारस्य सर्वसप्रतिपत्ते । पुराकल्पे शिवो मे पुत्रो भूयादिति अभिसधाय तपस्यन्ब्रह्मा अग्नौ जुहाव, तस्य जुह्वतो ललाटादुद्गत स्वेदबिन्दुरग्नौ पतित्वा लोहितो भूत्वा पुनर्झटित्येव नील सञ्जदतिष्ठत्, ततो भगवान्प्रादुर्बभूवेति शिवपुराणे प्रपञ्चितम् । तदन्ते चाय श्लोक — 'भूत्वा लोहितमाश्वेव पुनर्नीलमभूत्तत । नीललोहित इत्येव तेनासावभवत्प्रभु' इति । यद्वा, नील कण्ठावच्छेदेन, लोहित सर्वाङ्गावच्छेदेनेति नीललोहित । इदं च सूर्यमण्डलान्तर्वर्तिनो रूपम् 'य एषोऽन्तरादित्ये हिरण्मय

पुरुषा दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' इति, 'असौ योऽवसर्पति नीलग्रीवो विलोहितः। उ-तैनं गोपा अदृशन्नदृशन्नुदहार्यः' इति च श्रुतेः । यद्वा, नीलो वामार्धेन, लोहितो दक्षिणार्धेन च इति स तथा । 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' इति श्रुतेः, 'अर्धपुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गलम्' इति च श्रुतेः, अस्याः श्रुतेः भविष्यत्पुराणे वेदपादस्तवे अर्धनारीश्वरपरतया विवरणात् । अथ वा नीला प्रकृतिः, अविद्यायाः आवारिकायास्तमः-प्रधानतया नीलत्वौचित्यात्; लोहितः पुरुषः, तस्य प्रवर्तकतया रजःप्रधानतया लोहितत्वौचित्यात्; उभयात्मकत्वान्नीललोहित. । यथोक्तं लिङ्गपुराणे— 'नीलश्च लोहितश्चैव प्रधानपुरुषान्वयात्' इति । अत्र ब्रह्मललाटजन्यत्वेदादाविर्भूत इति प्रथमव्याख्याने, अयं नीललोहित. संहाररुद्रव्यूहान्तर्गतः ब्रह्मजन्यत्वाल्लिङ्गात्; त्रिमूर्तीनां हि अन्योन्यस्या उत्पत्तिः शिवपुराणप्रसिद्धा । यथोक्तं वायुसंहितायाम्— 'त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्' इत्युपक्रम्य 'तपसा तोषयित्वा तु पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥ कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयम् । विष्णुश्च भगवांस्तत्र ब्रह्माणमसृजत्पुनः ॥ नारायणं

पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वरा ॥ परस्परस्माज्जायन्ते परस्परजयैषिणः ' इति । अस्य च रूपं द्रोणपर्वणि कृष्णार्जुनयोः कैलासयात्रायां दर्शितम् । यथा— 'तत पार्श्वे वृषाङ्कस्य ब्रह्मचारी व्यवर्तत । पिङ्गाक्षस्तपसा श्रेष्ठो बलवान्नीललोहित. ' इति । सूर्यमण्डलान्तर्वर्तीति व्याख्याने, प्रधानपुरुषोभयाधिष्ठातेति व्याख्याने चायं नीललोहित सदाशिव एव प्रथमोक्तः, यथोक्त लिङ्गपुराणे—'तेषां भावं समालोक्य मुनीना नीललोहितः । प्राह गम्भीरया वाचा मण्डलस्थः सदाशिवः' इति । तथा तत्रैव— 'मण्डले चाग्रतोऽपश्यं देवदेवं सहोमया' इत्युपक्रम्य, तस्य पूर्वमुखं पीतं प्रसन्नं पुरुषात्मकम् । अघोरं दक्षिण वक्त्रं नीलाञ्जनचयोपमम्' इत्यादिना पञ्चब्रह्मात्मकत्वकीर्तनाच्च । अर्धनारीश्वर इति व्याख्याने तु महेश्वरव्यूहान्तर्गतोऽयम् , 'त्रयोदश हरेरर्धमर्धनारी चतुर्दशम्' इति वातूलशुद्धवचनात् । इदं च श्रुतिप्रसिद्धं नाम, 'द्रापे अन्धसस्पते दरिद्र-नीललोहित' इति ॥ ९ ॥

**शंकरः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ।**
**शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥**

शंकर इति । शं कल्याणं करोतीति शंकरः, 'शमि धा-

वो: संज्ञायाम्' इत्यच् प्रत्ययः ; अत्र यद्वक्तव्यम्, तत्सर्वम् 'शंभुः' इत्यत्रोक्तम् । इदं च श्रुतिप्रसिद्धं नाम; 'नमः शंकराय च मयस्कराय च' इति ॥ १० ॥

शूलपाणिरिति । शूलं पाणौ यस्य सः शूलपाणि, 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति पाणिशब्दस्य परनिपातः । अस्य च शूलस्य त्रिगुणात्मकत्वं पाद्मपुराणे दर्शितम् ; यथोक्तम्— 'अथ यज्ञात्मको विष्णुस्त्रिशूलं मनसाकरोत् । गुणावस्थात्रिकालात्मलोकशक्तित्रयात्मकम्' इति । अत एव शिवागमेषु 'त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता' इति, 'इच्छाज्ञानक्रियारूपात्रिशूल शक्तयो मताः' इति च तदेकदेशोऽनूदितः । एवं चैवंभूतस्य शूलस्य करस्थत्वोक्त्या त्रिगुणात्मिकाया मायाया स्वाधीनत्वमुक्तं भवति । इदं च श्रुतिप्रसिद्धं नाम; 'ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति श्रुतेः ॥ ११ ॥

खट्वाङ्गीति । खट्वाया मञ्चस्य अङ्गं पादः सोऽस्यास्त्यायुधत्वेनेति खट्वाङ्गी । खट्वाङ्गायुधत्वं च सदाशिवस्य प्रसिद्धम्; यथोक्तं कामिके सदाशिवप्रतिष्ठापटले— 'सदेशस्थापनं वक्ष्ये तल्लक्षणपुरःसरम्' इत्युपक्रम्य, 'पिङ्गलाभजटाजूटं दशदोर्दण्डमण्डितम् । अभयं च प्रसादं च

तथा शक्तिं त्रिशूलकम् ॥ खट्वाङ्गं दक्षभागस्थैर्वहन्तं करपल्लवैः । भुजङ्गं चाक्षमालां च डमरुं नीलपङ्कजम् ॥ बीजपूरं च वामस्थैर्वहन्तं सुप्रसन्नम्' इति । 'इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः । शक्तास्ता एव खट्वाङ्गं शुद्धसत्त्वप्रवर्तिकाः।' इति शिवागमवचनेन खट्वाङ्गस्य सत्त्वप्रवर्तकेच्छादिशक्तित्रयात्मकतया 'महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्रुतिसिद्धं सत्त्वप्रवर्तकत्वं सूचितम् । अथ वा ब्रह्मशिरोलवनप्रयुक्तब्रह्महत्याव्रताङ्गतया खट्वाङ्गधारित्वं । ब्रह्महत्याव्रताङ्गखट्वाङ्गधारणं च स्मृतिप्रसिद्धम्, 'खट्वाङ्गं दण्डार्थम्' इत्यापस्तम्बोक्तेः 'कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः । पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा प्रतिमुच्यते' इति शान्तिपर्ववचनाच्च । एतेन स्वयमकर्मवश्योऽपि लोकशिक्षार्थं व्रतमाचरितवानिति सूचनेन लोकानुग्रहैकरसिकत्वमुक्तं भवति । एवं च 'शूलपाणिश्च' इति चकारः अत्यर्थको विरोधं द्योतयति— शूलपाणिरपि खट्वाङ्गीति । 'त्रैगुण्यं शूलमेतस्य' इति प्रागुक्तरीत्या शूलपाणिरित्यस्य त्रिगुणातीतत्वपर्यवसानेन 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति स्मृतेः त्रिगुणातीततया स्वस्य विधिनिषेधागोचरत्वेऽपि लोकशिक्षार्थं खट्वाङ्गधारणरूपव्रतचारीत्यन्वयात् । ननु ब्रह्म-

णः शिरोलवनमात्रात्कथं ब्रह्महत्यायाः प्रसक्तिः? तस्याः ब्राह्मणप्राणवियोजनप्रयोज्यत्वादिति चेत्, भ्रान्तोऽसि, भवन्तमेव पृच्छामः:— अस्तु ब्रह्मणः प्राणवियोजनम्; तथापि कथं तस्याः प्रसक्तिः, ब्राह्मणत्वस्य मनुष्यत्वव्याप्यतया ब्रह्मणो ब्राह्मणत्वाभावात्, अस्तु वा सोऽपि ब्राह्मणः, तथापि तच्छिरोलवितुः शिवस्य कथं प्रत्यवायः? मनुष्याधिकारत्वात् 'न ब्राह्मणं हन्यात्' इति शास्त्रस्येति । यदि ब्रूषे, प्रत्यवायप्रसक्तिरहितेनापि परमेश्वरेण एवं प्रायश्चित्तमाचरितं यदि, किमु वक्तव्यं मादृशामिति लोकस्य प्रायश्चित्ते प्रवृत्तिसिद्धये तदाचरितमिति, इदमपि तथेति गृहाण— प्राणवियोजनाभावेऽपि शिरोलवनमात्रेण चेद्ब्रह्महत्याव्रतमाचरितम्, किमु वक्तव्यं सर्वथैव वधे इति लोकानां बोधार्थमेवमाचरितमिति । उक्तं चैवं ब्रह्माण्डपुराणे— यद्यप्ययमुक्तपाणोऽसि तथाप्येषोऽनघोऽपि सन् । भिक्षाचरणमात्रेण प्रायश्चित्ती भविष्यति ॥ एवं कृते न केनापि ब्रह्मद्रोहः कृतो भवेत् । इत्युक्त्वा तौ गणेशानौ देवदेवोऽभ्यभाषत ॥ ब्राह्मणा नावमन्तव्या इति लोकस्य कल्पये । युवां भिक्षाटनं कर्तुं नियुक्तावनघौ मया' इति ॥ १२ ॥

विष्णुवल्लभ इति । विष्णुर्वल्लभः प्रियो यस्य उपासक-

स्त्वेनेति वा, विष्णोर्वल्लभ. प्रिय. स्वयमुपास्यत्वेनेति वा विष्णुवल्लभ· । इदं च सौप्तिके पर्वणि अश्वत्थामानं प्रति शिववचनेन दर्शितम्—— 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च । क्षान्त्या धृत्या च भक्त्या च कर्मणा मनसा गिरा ॥ यथावदहमाराध्य कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतम' कृष्णादन्यो मम न विद्यते' इति । जलधरवधार्थं स्वपादाङ्गुष्ठरेखया जनितं सुदर्शनं बहुकालमुपासीनाय विष्णवे शूलं गृहीत्वा शिवो दत्तवानिति चक्रप्रदानानुग्रहमुखेन च विष्णुप्रियत्वं सर्वपुराणप्रसिद्धम् 'चरणाङ्गुष्ठरेखोत्थं जलमध्ये सुदर्शनम् । प्रदाय विष्णवे शूलं स्वयं जग्राह वैष्णवम्' इत्यादिना । अथ वा, विष्णुर्वल्लभः प्रिय स्वात्मत्वेनेति तथा । 'उमासहायं परमेश्वरं प्रभुम्' इत्युपक्रम्य 'स एव विष्णुः स प्राण.' इति श्रुते, 'आवयोरन्तरं नास्ति शब्दैरर्थैरुमापते' इत्यादिस्मृतेश्च । अत्र प्रथमव्याख्याने—— 'चक्रदानस्वरूपं तु स्मृतमेकोनविंशकम्' इति वातूलशुद्धोक्ता एकोनविंशतितममूर्तिः, द्वितीयव्याख्याने तु विष्णवभेदकीर्तनेन 'त्रयोदशं हरेरर्धम्' इति वातूलशुद्धोक्ता शङ्करनारायणात्मिका महेश्वरस्य त्रयोदशीमूर्तिरप्यनुसंहिता ॥ १३ ॥

**शिपिविष्ट इति** । शिपयः पशवः 'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुतेः । तेषु विष्टः प्रविष्टः स्वामिभावेन स्थित इति यावत्, 'एषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्' 'इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये' इति च श्रुतेः । इदं च श्रुतिप्रसिद्धं नाम; 'नमो गिरिशाय च शिपिविष्टाय च' इति ॥ १४ ॥

**अम्बिकानाथ इति** । अम्बिकाया नाथः पतिरिति वा, अम्बिकां नाथते याचते इति वा, अम्बिका नाथते आशास्ते इति वा अम्बिकानाथः, अम्बिकाप्रार्थनं शिवस्य तद्वरणार्थं सप्तर्षिप्रेषणेन, तदाशासनं तदर्थतपश्चरणेन च शिवपुराणे गौरीकल्याणप्रकरणे प्रपञ्चितम् । एतेन च 'वैवाह्यं पञ्चमं प्रोक्तम्' इति वातूलशुद्धोक्ता पञ्चमी महेश्वरस्य कल्याणसुन्दरमूर्तिरनुमहिता । इदं चार्थतः श्रुतिप्रसिद्धं नाम; 'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः' इति ॥ १५ ॥

**श्रीकण्ठ इति** । श्रीः कालकूटजनिता शोभा, तद्वान्कण्ठो यस्य स तथा; *कालकूटजनितमालिन्यमपि शोभैव* परमेश्वरस्य, 'विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः' इति न्यायादिति भावः । अथ वा श्रीर्विषमेव, 'श्रीविषरचना-

शोभासंपत्परत्नशाखिषु । वाणीलक्ष्मीत्वक्षेषु विषे बिल्वेऽप्यथ त्रिषु' इति नानार्थरत्नमालावचनात् । तद्वान्कण्ठोऽस्येति प्राग्वत् । अनेन इतरासाध्यकर्मकरत्वं सूचितम् । एतेन 'विषापहरणं रूपमष्टादशमिति स्मृतम्' इति वातूलशुद्धवचनावगमिता महेश्वरस्याष्टादशी मूर्तिरनुसंहिता ॥

भक्तवत्सल इति । वत्सः कामः इच्छा, तद्वान्वत्सलः; 'वत्सांसाभ्यां कामबले' इति मत्वर्थे लच्प्रत्ययमनवधाने च वत्सशब्दः कामवचनः, भक्तेषु वत्सलः प्रेमशाली भक्तवत्सलः; तथात्वं चास्य 'मज्ञाभाश्रापरो लाभस्तेषामभित यथा तथा । ममापि लाभस्तज्ञामाज्ञापरः परमेश्वरि' इत्यादिशिवपुराणवचनैरावेदितम् । एतेन 'चण्डेशानुग्रहं चैव ततः सप्तदशं स्मृतम्' इति वातूलशुद्धवचनावगमिता चण्डेश्वरानुग्राहिका सप्तदशी महेश्वरमूर्तिरनुसंहिता ॥ १७ ॥

भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः ।
उग्रः कपाली कामारिरन्धकासुरसूदनः ॥ ३ ॥

भव इति । भूधातोः मचाद्यर्थात्कर्तरि पचाद्यच्, भवत्यस्तीति भवः, भस्मित्यर्थः, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । यद्वा भवत्येरिदं रूपम्, अस्त्यस्मादित्थमित्यपादाने वा,

अस्त्यस्मिन्विश्वमित्यधिकरणे वा, 'ऋदोरप्' इत्यप्प्रत्यये चि-कीर्षिते एव 'अस्तेर्भूः' इति भ्वादेशे भव इति रूपम्; कुसूला-त्पचतीत्यादावादानाङ्गपाके पचेरिव आविर्भावाङ्गसत्तायाम-स्तेर्वर्तनादपादानोपपत्तिः; न च 'श्रिणीभुवोऽनुपसर्गे' इति घञा भाव्यमिति वाच्यम्, तत्र श्रीणीभ्यां साहचर्याद्भौवा-दिकस्यैव भवतेर्ग्रहणेन अस्तेरप्प्रत्ययस्याप्रतिबन्धात्। एवं च द्वितीयव्याख्याने जगदुपादानत्वम्, तृतीयव्याख्याने जग-दाधारत्वं चोक्तं भवति; तथा च श्रुतिः—'यो योनिं योनिम-धितिष्ठत्येको यस्मिन्निदं सं च विचैति सर्वम्' 'तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति' इति। इदं च जलाधिष्ठात्र्या मूर्तेर्नाम; यथोक्तं शिवपुराणे—'संजीवनं समस्तस्य जगतः सलिलात्मिका। भव इत्युच्यते मूर्तिर्भवस्य परमात्मनः' इति। 'आपो वा इदं सर्वं विश्वाभूतान्यापः' इत्यादिश्रुत्या सर्वात्मत्वेन श्रुतानामपामधिष्ठात्र्या मूर्तेरपि सर्वात्मकतानिर्वाहकजगदुपादानत्वप्रतिपादकभवनामौचित्या-त्। यद्यपि 'इयमेव सा या प्रथमा व्यौच्छत्' इति दे-वीसूक्ते चिच्छक्त्यंशभूतानां देवीनां कृत्यविशेषप्रपञ्चनपरे 'अपामेका महिमानं बिभर्ति' इति श्रुत्या एका चिच्छ-क्त्यंशभूतानां मध्ये काचिद्देवी अपां महिमानम् 'आपो वा

इदं सर्वम्' इत्यादिश्रुतिप्रतिपन्नजगदुपादानत्वलक्षणं माहात्म्यं बिभर्ति पोषयति स्वसंनिधानेन संपादयति शरीरशरीरिणो रभेदोपचारेण शरीरिधर्मेण शरीरव्यपदेशौचित्यादित्यर्थः तात्पर्यकथा चिच्छक्त्यैव जलाधिष्ठातृत्वं श्रूयते, तथापि शक्त्य भेदाच्छिवस्यापि तत्पुराणागमेषु वर्णितमित्यविरोधः । लि ङ्गपुराणे तु अष्टमूर्तिममष्ट्यभिमानिन्या मूर्तेर्भव इति नामे त्युक्तम्, यथा— 'अष्टमूर्तिर्जगद्व्याप्य स्थितोऽयं परमे श्वरः । चराचराणां भूतानां धाता विश्वंभरात्मकः ॥ भव श्चेत्युच्यते देवैर्भगवान्वेदवादिभिः' इति । अत एव शर्वादि- वदेकतत्त्वाभिमानित्वाविशेषेऽपि पृथिवीमूर्त्यनन्तरभावित्वे ऽपि समष्ट्यभिमानित्वमपि भवमूर्तेरस्तीति गौरवादेव आ पस्तम्बाश्वलायनबोधायनादिसूत्रेषु शैवादिपुराणेषु कामि काद्यागमेषु च शूलगवेशानबलिनित्यार्चनादिकर्मसु अष्ट नाम्नां मध्ये भवनाम्न एव प्राथम्येन पाठः— 'भवाय देवाय नमः शर्वाय देवाय नमः' इत्यादिना । इदं च श्रुति- प्रसिद्धं नाम, 'नमो भवाय च रुद्राय च' इति ॥ १८ ॥

शर्व इति । शृणाति हिनस्ति अन्तकाले सर्वमिति शर्वः, 'शृस्वृस्निहि' इत्यौणादिको वप्रत्ययः । इदं च पृथिव्यधि ष्ठातृमूर्तेर्नाम । यथोक्तं शिवपुराणे— 'उर्वीं शर्वात्मिका मू

र्तिरिति शास्त्रस्य निश्चयः' इति । जगदुपसंहारकतया नि-
वर्तकस्वभावस्य निवृत्तिकलात्मकपृथिव्यधिष्ठातृत्वौचित्यात् ।
इदं च श्रुतिप्रसिद्धं नाम; 'सर्वतः शर्वसर्वेभ्यः' इति ॥

त्रिलोकेश इति । त्रयो लोकाः त्रिलोकाः त्रिलोकाना-
मीशः त्रिलोकेशः । यद्यपि त्रयो लोकाः त्रिलोका इति न
लभ्यते, 'दिक्संख्ये संज्ञायाम्' इति नियमात्; नापि त्रित्व-
युक्ता लोकाः त्रिलोकाः इति उत्तरपदलोपी शाकपार्थिवादि-
वत्समासः; स हि विचार्यमाणः पूर्वपदलक्षणामात्राधिकः
कर्मधारय एव पर्यवस्यतीति आकरे स्फुटमिति 'दिक्संख्ये'
इति नियमादेव तस्यापि व्यावृत्तिसिद्धेः; तथापि त्रिषु लो-
केषु ईशः ईशनमस्येति त्रिपदो बहुव्रीहिः व्यधिकरणपूर्वपद
इति समाधेयम्; यद्यपि त्रयाणां लोकानां समाहारः त्रिलो-
कम् इति समाहारद्विगुनापि एतदर्थलाभः, तथापि पात्रादि-
त्वं परिकल्प्य ङीप्वारणे नियामकाभाव इत्युपेक्षितम् । त्रि-
लोकीश इति सुगमः पाठः; तथा च श्रुतिः— 'य एको
जालवानीशत ईशिनीभिः सर्वान् लोकानीशत ईशिनीभिः
एको हि रुद्रो न द्वितीयाय तस्थे य इमाँल्लोकानीशत ईशि-
नीभिः प्रत्यङ्जनाः संचुकोचान्तकाले संसृज्य विश्वा भुवनानि
गोप्ता' इति । एवं च अस्य ईशनं सृष्टिस्थितिसंहारकर्तृत्व-

उग्र इति। 'उच समवाये' इति धातोः संबन्धमात्रार्थात् उच्यति सर्वेषामुपरि वर्तत इति वा, उत्पूर्वोद्गच्छतेः उद्गच्छति विश्वस्मादूर्ध्वं वर्तते विश्वोत्तरो भवतीति वा उग्रः, 'ऋज्रेन्द्राग्रवज्रविप्रकुब्जचुब्जक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवव्रेरामालाः' इत्यौणादिकनिपातनात्साधुः; उग्रशब्दश्चोत्कृष्टवाची श्रुतौ प्रसिद्धः 'उग्रोऽस्युग्रोऽहं सजातेषु भूयासम्' इत्यादौ। एवं च विश्वाधिक इति पर्यवसितोऽर्थः। तथा च श्रुतिः— 'विश्वाधिको रुद्रो महर्षिः' इति। उग्र इति च वायोरधिष्ठात्री मूर्तिरुच्यते। यथोक्तं शिवपुराणे—'स्पन्दयत्पवनो विश्वं बिभर्ति स्पन्दते च यत्। उग्र इत्युच्यते सद्भिर्मूर्ती रुद्रस्य वेधसः' इति। अस्यार्थः— प्रायेण संबन्धस्य कर्मजन्यतया संबन्धहेतुभूतस्पन्दकारकतया तादृशस्पन्दाश्रयतया च वायोस्तदधिष्ठातृमूर्तेरपि संबन्धार्थकधातूत्पन्नोग्रपदवाच्यतौचित्यादिति। इदं च श्रुतिप्रसिद्धं नाम; 'नम उग्राय च भीमाय च' इति ॥ २३ ॥

कपालीति। कपालं ब्रह्मकपालमस्यास्तीति कपाली, एतेनानेकब्रह्मात्ययदर्शित्वलक्षणं सनातनत्वमुक्तं भवति। यद्वा, ब्रह्मशिरश्छेदनरूपेण ब्रह्मापेक्षया बलाधिकत्वं सूचितम्। यथोक्तमागमदीक्षितैर्ब्रह्मतर्कस्तवे—'कल्पान्तरद्दिण-

कोटिकरोटिमालाभस्माङ्गरागकमठाङ्गवराहशृङ्गैः । आकल्प एव तव मङ्गलविग्रहस्य सर्वोत्तरं किमु यशं शिव न व्यनक्ति' इति । एतेन कङ्कालनाथाख्या 'कङ्कालं षोडशं भवेत्' इति वातूलशुद्धवचनावगता षोडशी महेश्वरमूर्तिरनुसंहिता ॥ २४ ॥

कामारिरिति । कामस्य मन्मथस्य अरिः कामारिः, मदननिग्राहकत्वं च शिवस्य सर्वपुराणप्रसिद्धम्; तेन च 'ज्ञानं विरागतैश्वर्यम्' इति श्लोकोक्तं वैराग्याख्यं द्वितीयमव्ययं सूचितम् । यद्वा, काम कामना अरिर्यस्य, यत्प्राप्तौ विरोधिनी कामना स कामारिरित्यर्थः । यथोक्तं शिवपुराणे—'फलोद्देशेन देवेशि लघुर्मयि ममाश्रयः । फलार्थी तदभावे मां परित्यक्तुं क्षमो यत' इति । कौर्मेऽपि ईश्वरगीतायाम्—'त्यक्त्वा पुत्रादिषु स्नेहं विशोको निष्परिग्रहः । यावज्जीवं विरक्तः सँल्लिङ्गमेवार्चयेच्छिवम् । एकेन जन्मना तस्य ददाम्यन्ते परं पदम्' इति । शिवधर्मेऽपि अष्टविधभक्तिनिरूपणावसरे—'मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् । स्वयमभ्यर्चनं भक्त्या मदर्थे चाङ्गचेष्टनम् ॥ मत्कथाश्रवणे सक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरणं नित्यं यश्च मां चोपजीवति ॥ योगी वाप्ययवायोगी विरक्तः कामुकोऽपवा'

इत्यादि । तत्सर्वं क्रमेण वैराग्यसंपादनद्वारा मोक्षफलकत्वाभिप्रायम् । अनेन च 'कामारिं सप्तम विद्यात्' इति वातूलशुद्धोक्ता महेश्वरस्य सप्तमी मूर्तिरनुसहिता ॥ २५ ॥

अन्धकासुरसूदन इति । कदाचिल्लीलार्थं देव्या शिवस्य नयनपिधाने कृते सर्वत प्रवृत्तात्तमस उद्भूतोऽसुर कश्चिदन्धका नाम, स च देवीकृतनेत्रपिधानप्रयुक्ततम समुद्भूतत्वाद्देव्या पुत्रत्वेन परिगृहीत., एवभूतस्यापि तस्य तामसत्वस्वाभाव्याद्द्रोग्धुमेव बुद्धिरासीत्, ततश्च त्रैलोक्य तेनापहृतम्, अम्बायाश्च द्रोह कृत, ततो भगवता भैरवेण महता युद्धेन निगृह्य शूलाग्रे प्रोतो ललाटाग्निना चिर तापित, कृतप्रायश्चित्तोऽभूदिति दृष्ट्वा देव्या प्रथम पुत्रत्वेन परिगृहीत इति दयया गणाधिपत्ये स्थापित इति कृत्स्नेन वामनपुराणेन प्रपञ्चितम् । तदिदमुच्यते— अन्धकासुरसूदन इति । नन्द्यादित्वाल्ल्युः, न तु 'अनुदात्तेतश्च हलादे' इति युच्, 'सूददीपदीक्षश्च' इति प्रतिषेधात् । यद्वा युजेव, न च प्रतिषेधो बाधक, 'न य' इति योगविभागेन तस्यानित्यत्वज्ञापनात् । एतेन प्रपञ्चद्रोग्धर्यपि देवी पुत्राभिसन्धिमकरोत् इति गुणमेव पुरस्कृत्य दया कृतेति गुणैकपक्षपातित्व सूचितम् ॥ २६ ॥

**गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।**
**भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥ ४ ॥**

गङ्गाधर इति । धरतीति धरः, गङ्गाया धरः गङ्गाधरः । गङ्गा चात्र हैमवती कुटिलापरनामधेया ब्रह्मशापासादितजलभावा वामनपुराणप्रसिद्धा, यद्धारणाय भगीरथेन शिवः प्रसादितः । एतेन भक्तवश्यत्वम्, इतरासाध्यकर्मकर्तृत्वं च सूचितम् । गङ्गाधारणस्येतरासाध्यत्वं च आरण्यपर्वणि भगीरथं प्रति गङ्गावचनेन दर्शितम्— 'करिष्यामि महाराज वचस्ते नात्र संशयः । वेगं तु मम दुर्धर्षं पतन्त्या गगनाच्छिवौ ॥ न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात्' इति । यथोक्तमप्पयदीक्षितैश्च ब्रह्मतर्कस्तवे— 'गङ्गा धृता न भवता शिव पावनीति नास्वादितो मधुर इत्यपि कालकूटः । संरक्षणाय जगतां करुणातिरेकात्कर्मद्वयं कलितमेतदनन्यसाध्यम्' इति ॥ २७ ॥

ललाटाक्ष इति । ललाटे अक्षि यस्य स ललाटाक्षः । लोकप्रसिद्धस्थानापेक्षया वक्रस्थानवर्तिलोचनशालित्वकीर्तनेन विश्वोत्तरज्ञानशालित्वं सूचितम् ॥ २८ ॥

सर्वेषां स्वस्वमर्यादायां वर्तनात् । तथा च श्रुतिः— 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति । लैङ्गेऽपि 'निर्देशेन शिवस्यैव मेदैः प्राणादिभिर्निजैः । बिभर्ति सर्वभूतानां शरीराणि प्रभञ्जनः ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि । पाकं च कुरुते वह्निः शंकरस्यैव शासनात्' इत्यादि । इदं च गगनाधिष्ठात्र्या मूर्तेर्नाम ; यथोक्तं शिवपुराणे— 'सर्वावकाशदा सर्वव्यापिका गगनात्मिका । मूर्तिर्भीमस्य भीमाख्या भूतवृन्दस्य भेदिका' इति । अस्यार्थः— सर्वावकाशदा सर्वेषां प्रवेशनिर्गमोचितावकाशप्रदा, सर्वव्यापिका विभुत्वात्, भूतवृन्दस्य पृथिव्यादिचतुष्कस्य भेदिका पञ्चीकरणप्रक्रियया स्वांशप्रवेशेन व्यावर्तिका इति । सर्वभयहेतुत्वे सर्वान्तर्यामित्वं मूलम्, तच्च सर्वव्यापकतानिबन्धनम्, इति सर्वव्यापकगगनाधिष्ठातृमूर्तेर्भीमपदवाच्यत्वमुचितमिति । इदं च श्रुतिप्रसिद्धं नाम; 'नम उग्राय च भीमाय च' इति ॥ ३१ ॥

परशुहस्त इति । परशुरायुधविशेषः, स हस्तेऽस्येति बहुव्रीहिः, 'प्रहरणार्थेभ्यः' इति हस्तशब्दस्य परनिपातः । 'त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता' इति प्रागुदाहृत-

कालकाल इति । कालयति नाशयतीति व्युत्पत्त्या कालो यमः, तस्यापि कालः, कालयिता उपसंहारक इति द्वितीयः कालशब्दः केवलयौगिकः; प्रथमस्तु योगरूढः । अथवा द्वावपि यौगिकावेव, तत्र प्रथमः कालशब्द उपसंहारप्रवृत्तिनिमित्तकतया अन्तककालरुद्रादिपरः द्वितीयस्तु प्राग्वदेव । यद्वा पक्षद्वयेऽपि द्वितीयकालशब्दोऽन्तकपर एव उपसंहारके गौणः । अत्र प्रथमव्याख्याने मार्कण्डेयार्थकालनिग्रहकथासूचनेन भक्तरक्षकत्वम्, द्वितीयव्याख्याने 'विश्वस्यैकं परिवेष्टितारम्' इति श्रुतिसिद्धं सर्वोपसंहारकत्वलक्षणं सर्वेश्वरत्वं सूचितम् । एतेन च 'कालकालमथाष्टमम्' इति वातूलशुद्धवचनावगता महेश्वरस्याष्टमी मूर्तिरनुसंहिता भवति । इदं च श्रुतिप्रसिद्धं नाम; 'ज्ञः कालकालो गुणी सर्वविद्यः' इति ॥ २९ ॥

कृपानिधिरिति । कृपा परदुःखप्रहाणेच्छा, तस्या निधिरित्यनेन सदा वर्तमानत्वमुक्तं भवति; तच्छिवस्य श्रुतिप्रसिद्धम् 'अर्हन्निदं दयसे विश्वमभ्भुवम्'। न वा ओजीयो रुद्र त्वदस्ति' इति ॥ ३० ॥

भीम इति । बिभेत्यस्मादिति भीमः, 'भीमादयोऽपादाने' इति निपातनात्साधुः । सर्वनियन्तुः शिवाद्भीत्यैव

सर्वेषां स्वस्वमर्यादायां वर्तनात् । तथा च श्रुतिः— 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति । लैङ्गेऽपि 'निर्देशेन शिवस्यैव भेदैः प्राणादिभिर्निजैः । बिभर्ति सर्वभूतानां शरीराणि प्रभञ्जनः ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि । पाकं च कुरुते वह्निः शंकरस्यैव शासनात्' इत्यादि । इदं च गगनाधिष्ठात्र्या मूर्तेर्नाम; यथोक्तं शिवपुराणे— 'सर्वावकाशदा सर्वव्यापिका गगनात्मिका । मूर्तिर्भीमस्य भीमाख्या भूतवृन्दस्य भेदिका' इति । अस्यार्थः— सर्वावकाशदा सर्वेषां प्रवेशनिर्गमोचितावकाशप्रदा, सर्वव्यापिका विभुत्वात्, भूतवृन्दस्य पृथिव्यादिचतुष्कस्य भेदिका पञ्चीकरणप्रक्रियया स्वानुप्रवेशेन व्यावर्तिका इति । सर्वभयहेतुत्वे सर्वान्तर्यामित्वं मूलम्, तच्च सर्वव्यापकतानिबन्धनम्, इति सर्वव्यापकगगनाधिष्ठातृमूर्तेर्भीमपदवाच्यत्वमुचितमिति । इदं च श्रुतिप्रसिद्धं नाम; 'नमः उग्राय च भीमाय च' इति ॥ ३१ ॥

परशुहस्त इति । परशुरायुधविशेषः, स हस्तेऽस्येति बहुव्रीहिः, 'प्रहरणार्थेभ्यः' इति हस्तशब्दस्य परनिपातः । 'त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता' इति प्रागुदाहृ-

शिवागमवचनेन 'सत्यकामः सत्यसंकल्पः' इति श्रुतिसिद्धममोघधारितत्वलक्षणं सत्यनिष्ठत्वम्, सत्ये निष्ठा निश्चलावस्थानं स्थैर्यं यस्येति विग्रहे सत्यानतिलङ्घित्वलक्षणम्, 'सत्येनैनं तपसा योऽनुपश्यति' 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च । क्षान्त्या धृत्या च भक्त्या च कर्मणा मनसा गिरा ॥ यथावदहमाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते' इत्यादिश्रुतिस्मृतिसिद्धसत्यप्रियताख्यत्वं वा सत्यनिष्ठत्वं सूचितम् ॥ ३२ ॥

मृगपाणिरिति । मृगवान्मृगः, एवंभूतः पाणिरस्येति मृगपाणिः; स च मृगो दारुकावने मुनिकृताभिचारप्रवृत्त इति स्कान्दे । यथोक्तम्— 'ततो मृगः समुत्थाय शिघ्रमागच्छदम्बरात् । सर्वाञ्ज्ञानविहीनांस्तान्मृगतुल्यानिव ब्रुवन् ॥ आदाय वामहस्तेन दधारेशश्च निश्चलम्' इति । मन्त्रशास्त्रे तु वेदरूप इति प्रसिद्धम् । यथोक्तं मृत्युंजयध्याने— 'स्वकरकलितमुद्रापाशवेदाक्षमालम्' इति । अत्र वेदो मृगः, ग्रन्थान्तरे 'मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्' इति समानप्रकरणे स्पष्टतयाभिधानात् । यद्वा मृगयतेरदन्ताद्धञ् मृगः, मार्गणं याचनम् । तथा चामरः— 'मार्गणं मृगया मृगः' इति । तत्प्रधानः पाणिरस्येति मृगपाणिः । एतेन

वैराग्यं सूच्यते । यद्वा भिक्षाटनकथासूचनेन मुनिजनानु-
ग्राहकत्वं सूच्यते ॥ ३३ ॥

जटाधर इति । जट सघाते, ततः पचाद्यच् , जटाः सं-
हतकेशाः तासां धरो जटाधरः, एतेन जटाधरणस्य तपो-
ऽङ्गतया तपोरूपं चतुर्थमन्ययं सूच्यते । यद्वा तीर्थभूतमा
महानद्यः सागराश्च, यथोक्तमानुशासनिके उमामहेश्वरसं-
वादे— 'यास्तु लोके महानद्यस्ताः सर्वास्तीर्थसंज्ञिताः ।
समुद्राश्च महातीर्थं पावनं परमं शुभम्' इति । ताश्च महा-
नद्यः प्रायेण कुलाचलोद्भवाः, तथा च तादृशकुलाचलसम-
स्तसागरात्मकजटाधारितया सर्वतीर्थाधार इति सूचितम् ।
जटानां च तथात्वं वराहपुराणे दर्शितम् । 'जटास्वरूपेण
समस्तसागराः कुलाचलाः सिंधुवहाश्च सर्वशः । शर्शा परि-
ज्ञानमिदं तव स्थितं न देव पश्यन्ति कुदृष्टयो जनाः' इति ।
एवं शिवस्य सर्वतीर्थाधारत्वाच्छिवानुस्मरणपूर्वकमेव कृता
तीर्थयात्रा फलतीत्यभिप्रेत्योक्तमानुशासनिके उमामहेश्वर-
सवादे तीर्थयात्राविधिप्रकरणे— 'बहिरेव शुचिर्भूत्वा त-
त्तीर्थं मन्मना विशेत्' इति । इदं च दक्षाध्वरे क्रतुमृगानु-
सारिमूर्तेरर्धभूताया यज्ञवाटस्थमूर्तेर्नाम; यथोक्तं वामनपुरा-
णे— 'तमेवानुससारेशश्चापमादाय वेगवान् । शरं पाशुपतं

कृत्वा कालरूपो महेश्वरः । अर्धेन यज्ञवाटान्ते जटाधर इति श्रुतः' इति ॥ ३४ ॥

**कैलासवासी कवची कठोरस्त्रिपुरान्तकः ।**
**वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥**

कैलासवासीति । अस्यतेऽस्मिन्नित्यासः, अधिकरणे घञ्, आवासस्थानमित्यर्थः, केलीनां विलासानां समूहः कैलम्, भिक्षादित्वादण्प्रत्ययः, कैलस्यासः कैलासः शिवालयः । स च हिमवन्मेरुमन्दरादिषु वैकुण्ठादुपरिभागे च विद्यमान, कर्मनिष्ठाभिगम्य, पुनरावृत्त्यपादानभूत इति सकलपुराणप्रसिद्धः । तत्र हिमवति विद्यमान आरण्यपर्वण्युत्तररामायणे च प्रसिद्धः, मेरुमन्दरादिवर्ती कूर्मपुराणप्रसिद्धः, वैकुण्ठादूर्ध्ववर्ती तु स्कान्दे काशीखण्डे दर्शितः । यथा— 'उपरिष्टात्त्रिलोक्याः कोटय. सत्यमीरितम् । सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥ ध्रुलोकात्परिसंख्यातः कोटिषोडशसंमितः । यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ॥ ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः । पार्वत्या सहितः शंभुर्गजास्यस्कन्दनन्दिभिः ॥ यत्र तिष्ठति विश्वेशः सकल· स परः स्मृतः' इति ।

वायवीये तु तस्य कैलासपदप्रवृत्तिनिमित्तभूतसकलभोगास्पदत्वमपि सूचितम्। यथा—'ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत्। भोगसंस्थानमतुलं कर्मयोगरतात्मनाम्॥ अप्रमेयगुणैः सर्वैर्विमानैः सर्वगामिकैः। असंख्यैस्तत्पुरं व्याप्तं मवेप्राण्युपकारकैः।' इत्यादिना 'सर्वेषां शिवभक्तानां तत्पुरं परिकीर्तितम्' इत्यन्तेन। अन्यश्च ततोऽप्यूर्ध्ववर्ती ध्यानयोगनिष्ठैकगम्यः पुनरावृत्तिरहितो नित्यः शिवधर्मोत्तरे दर्शितः परमशिवलोकाख्यः। यथा— 'ऊर्ध्वं शिवपुरात्तस्मात्स्थानत्रयमनुत्तमम्। नित्यं परमशुद्धं च स्कन्दोमाशंकरास्पदम्' इत्युपक्रम्य, 'ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः। न तेषां पुनरावृत्तिर्घोरे संसारसागरे। सर्वज्ञाः सर्वदा शुद्धाः परिपूर्णा महेश्वराः॥ शिवतुल्यबलोपेताः परं शिवपुरं गताः' इत्यन्तेन। तेषु कैलासेषु वस्तुं शीलमस्यास्तीति कैलासवासी॥ ३५॥

कवचीति। कवचमस्यास्तीति कवची, कवचवत्त्वं च न प्राकृतकवचमादाय, 'नास्य देहेऽस्थि रुधिरं न मांसम्' इत्यादिप्रागुदाहृतवचनात्; किं तु स्वातन्त्र्यमादाय, 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' इति शिव-

पुराणवचनेन चतुर्थस्थानगतस्य स्वातन्त्र्यस्य चतुर्थाङ्गमूतकवचत्वोपपादनात् । युक्तं च स्वातन्त्र्यस्य कवचत्वम् ; कवचस्य हि द्वे प्रयोजने—परैरदृश्यत्वं परप्रयुक्तबाणाद्यस्पृश्यत्वं चेति । अत एवागमेषु आवाहितस्य देवस्य विघ्नैरस्पृश्यत्वं पाषण्डादिभिरदृश्यत्वं च साधयितुं कवचेनावकुण्ठनं विधीयते । एवं च परमेश्वरस्य सर्वादृश्यत्वं सर्वदुष्प्रापत्वं च स्वातन्त्र्यैकमूलम् 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रप्रतिपन्नलीलारूपस्य स्वस्वरूपदर्शनस्पर्शनासमर्थजगत्सर्गस्य तथाविधपरमेश्वरेच्छां विना कारणान्तराभावेन कवचफलके स्वातन्त्र्ये कवचव्यपदेशौचित्यात् । तस्मादप्रतिहतस्वातन्त्र्यशालीत्युक्तं भवति । इदं च श्रुतिप्रसिद्धं नाम, 'नमो बिल्मिने च कवचिने च' इति ॥ २६ ॥

कठोर इति । क्रूर इत्यर्थः । घोरा शिवा चेति द्वे तनू शिवस्य श्रुतिप्रसिद्धे— 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या' 'ये ते अग्ने शिवे तनुवौ' 'यास्ते अग्ने घोरास्तनुवः' 'अघोरेभ्योऽथ घोरेभ्यः' इत्यादिश्रुतेः । महाभारतेऽप्यानुशासनिके दर्शितम्— 'वदन्त्युग्रं महादेवं तथा देवं महेश्वरम् । एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः । घोरामन्यां शि-

वामन्यां ते तनू बहुधा पुनः ॥ परा घोरा तनुर्यास्य माग्नि-
र्विद्युत्समप्रभा । शिवा सौम्याथ ह्यास्य धर्मस्त्वापोऽथ च-
न्द्रमाः ॥ आत्मनोऽर्धं तु तस्याग्निरुच्यते भरतर्षभ ' इति ।
तयोस्तन्वोर्मध्ये घोररूपतनुशालीत्यर्थः । एतेन जगद्रक्षक
इत्युक्तं भवति, शिवस्य घोरतनुपरिग्रहो जगद्रक्षाहेतुरित्यानु-
शासनिके व्यक्तमभिधानात् । यथा— ' उमा— भगव-
न्देव देवेश त्रिणेत्र वृषभध्वज । पिङ्गलं विकृतं भाति रूपं
ते तु भयानकम् ॥ भस्मदिग्ध विरूपाक्ष तीक्ष्णदंष्ट्र
जटाकुलम् । व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसंततम् । रौद्रं
भयानकं घोरं शूलपट्टससंयुतम् । किमर्थमीदृशं रूपं
तन्मे शंसितुमर्हसि ॥ महेश्वर.— तदहं कथयिष्यामि शृणु
तत्त्वं समाहिता । द्विविधो लौकिको भाव. शीतमुष्णमिति
प्रिये ॥ तयोर्निमथितं सर्वं सौम्याग्नेयमिदं जगत् । सौम्य-
त्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ॥ अनेन वपुषा
नित्यं सर्वांल्लोकान्बिभर्म्यहम् । रौद्राकृति विरूपाक्षं शूल-
पट्टससंयुतम् ॥ आग्नेयमिति मे रूपं देवि लोकहिते रतम् ।
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ॥ तदैव सर्वलो-
कानां विपरीतं प्रवर्तते । तस्मान्मयेदं ध्रियते रूपं लोकहितै-
षिणा ' इति । यद्वा, कठोर पूर्ण , तथा च निघण्टु.—

'कठोरः कठिने पूर्णे' इति; माघकाव्येऽपि—'कठोरताराधिपलाञ्छनच्छविः' इति। तथा च श्रुतिः—'तेनेदं पूर्णं पुरुषेण सर्वम्' इति ॥ ३७ ॥

त्रिपुरान्तक इति। त्रीणि पुराणि त्रिपुराणि, 'दिक्संख्ये संज्ञायाम्' इति समासः, अन्तशब्दान्नाशवचनात् तत्करोतीति ण्यन्तात्कर्तरि ण्वुलि अन्तकः, त्रिपुराणाम् अन्तकः त्रिपुरान्तकः। त्रिपुरसंहारकत्वं च तैत्तिरीयश्रुतावुपसदर्थवादे 'तेषामसुराणां तिस्रः पुर आसन्' इत्यादिना स्पष्टं प्रतिपादितम्, सर्वपुराणेषु च प्रसिद्धम्। यद्वा त्रीणि पुराणि शरीराणि, 'पुरसंज्ञे शरीरेऽस्मिञ्छयनात्पुरुषो हरिः' इति विष्णुपुराणवचनात्। तानि च स्थूलसूक्ष्मकारणात्मकानि—स्थूलं भौतिकमेव, सूक्ष्मं लिङ्गशरीरम्, कारणं स्वविद्यारूपमिति। एषां त्रिपुराणामन्तकः त्रिपुरान्तकः; शिवज्ञानस्य च विदेहकैवल्यहेतुत्वं मन्त्रोपनिषदि श्रुतम्। यथा—'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्। कालसर्गकरं देवं ये विदुस्ते जहुस्तनुम्' इति। अत्र प्रथमव्याख्याने 'नवमं त्रिपुरारिः स्यात्' इति वातूलशुद्धोक्ता नवमी महेश्वरमूर्तिरनुसहिता। इदं च श्रुतिप्रसिद्धं नाम, 'त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नमः' इति ॥

वृषाङ्क इति । वृषः अङ्कः लाञ्छनं यस्य स वृषाङ्कः वृषध्वज इत्यर्थः । वृषभस्य च ध्वजत्वं भारते उमामहेश्वरसंवादे सहेतुकं दर्शितम् । यथा—'उमा–भगवन्देव देवेश पिनाकपरमप्रिय । वाहनेषु तथान्येषु सत्सु भूतपते तव ॥ अयं तु वृषभः कस्माद्वाहनं स यथाभवत् । एवं मे संशयो देव तं मे शंसितुमर्हसि ॥ महेश्वरः— तदहं ते प्रवक्ष्यामि वाहनं स यथाभवत् । आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ॥ बलमेदनोपेता दर्पयुक्ताश्चरन्ति ताः । अहं तु तप आतिष्ठं तस्मिन्काले शुभानने ॥ एकपादश्चोर्ध्वबाहुर्लोकार्थे हिमवद्गिरौ । गावो मे पार्श्वमागम्य दर्पोत्सिक्ताः समन्ततः ॥ स्थानभ्रंशं तदा देवी चक्रिरे बहुशस्तदा । अपकारेण चैतासां मनःक्षोभोऽभवन्मम ॥ तस्माद्दग्धा मया गावो रोषाविष्टेन चेतसा । तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति ॥ अनेन वृषभेणाहं शमितः संप्रसादनैः । तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ॥ श्वेतोऽयं वृषभो देवी सर्वसंस्कारसंयुतः । वाहनत्वे ध्वजत्वे च तदाप्रभृति योजितः ॥ तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम्' इति । अन्य च वृषस्य धर्मरूपत्वं शिवागमेषु प्रसिद्धम्—'शुद्धस्फटिकसंकाशो धर्मरूपो वृषः स्मृतः' इति । ब्रह्मा-

ण्डपुराणेऽपि— 'वन्दे धर्मवृषं वृषध्वजरथं तीर्थाश्रितासं सदा' इति । स्कान्देऽपि— 'तस्माद्धर्मः सदा शंभोर्वृषरूपेण वाहनम्' इति । वाहनस्यैव सतो ध्वजत्वं तु प्रागेवोपपादितम् । धर्म एवास्यासाधारणं लाञ्छनमिति उक्त्या धर्मप्रियत्वं सूचितम् ॥ ३९ ॥

वृषभारूढ इति । 'वृष सेचने' वर्षणात्सर्वकामानां वृषभः, धर्मरूपतया सर्वकामप्रदत्वात् 'ऋषवृषाभ्यां कित्' इत्यौणादिकोऽभच्प्रत्ययः, तमारूढो वृषभारूढः, 'द्वितीया—' इति योगविभागात्समासः; वृषभवाहन इत्यर्थः । यद्वा, परम्परया वृषभमारूढ इति तथा, त्रिपुरविजयप्रयाणावसरे भगवद्भाराक्षमतया सुप्रजानुषु वेदाश्वेषु पततो रथस्य वृषभरूपेण विष्णुना धारितत्वेन तादृशरथारूढस्य परम्परया वृषभारूढत्वात् । यथोक्तं लिङ्गपुराणे— 'तस्मिन्नारोहति रथं कल्पितं लोकसंभृतम् । शिरोभिः पतिता भूमौ तुरंगा वेदरूपिणः ॥ अथाधस्ताद्रथस्यास्य भगवान्धरणीधरः । वृषेन्द्ररूपी चोत्थाप्य स्थापयामास वै क्षणम् ॥ क्षणान्तरे वृषेन्द्रोऽपि जानुभ्यामगमद्धराम् । अभीशुभिश्च भगवानुन्नम्य च हयान्विधिः ॥ स्थापयामास देवस्य वचनाद्वै रथं शुभम्' इति । अनेन 'तृतीयं तु वृषारूढम्' इति वातूलशुद्धोक्ता

महेश्वरस्य तृतीया मूर्तिरनुसंहिता ॥ ४० ॥

भस्मोद्धूलितविग्रह इति । भस्म विभूतिः । 'भस भर्त्सनदीप्त्योः' इति जौहोत्यादिको धातुः, ततः कर्तरि 'अन्येभ्योऽपि दृश्यते' इति मनिन्प्रत्ययः, दृशिग्रहणाच्छान्दसस्यापि भाषायां प्रयोग इति धातुवृत्तौ । पापानां रोगाणां मायापाशस्य च भर्त्सनाद्भस्म, तत्र पापनिवर्तकत्वं जाबालश्रुतौ प्रसिद्धम्— 'पापं नाशयते कृत्स्नमपि जन्मशतार्जितम्' इति । रोगग्रहपीडादिनिवर्तकत्वं रक्षार्थत्वकीर्तनेनानुशासनिके उमामहेश्वरसंवादे दर्शितम्— 'रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि । लाञ्छनार्थं च भक्तानां भस्म दत्तं मया पुरा' इति । पाशनिवर्तकत्वं मङ्गोत्तरखण्डे दर्शितम्— 'उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये । आचरन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थितम्' इति । विशिष्टं तु वामिष्ठलैङ्गे दर्शितम्— 'भर्त्सनात्सर्वपापानां पाशानां च महामुने । भस्मेति कीर्त्यते रक्षा रोगाणां चापि भर्त्सनात्' इति । यद्वा, अस्मादेव धातोः ज्ञानार्थादन्वर्थात्रितण्यर्थात्प्राग्वदेव मनिन्प्रत्यये भस्म ज्ञानजनकमित्यर्थः । तथा च माधवीये स्मृतिरत्ने नारदीयवचनमुदाहृतम्— 'भासनाद्भसितं प्रोक्तं भस्म पापस्य भर्त्सनात् । भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी पुनः'

इति। वासिष्ठलैङ्गेऽपि– ‘भयेभ्यो रक्षणाद्रक्षा भासनाद्भसित तथा’ इति । यद्यपि भसितपदव्युत्पत्तिप्रदर्शनपरमुदाहृत वचनद्वयम्, तथापि भसधातोर्ज्ञानार्थतया भस्मनि तदर्थानुस्यूतौ भस्मनस्तद्धातूपपन्नशब्दवाच्यतया चेद् प्रमाणमिति लिखितम्, नन्नोत्तरखण्डे भस्मशब्देऽपि इयमेव व्युत्पत्ति सूचिता ‘महाभस्म महादेवो महामायावभासक’ इति। भस्मनश्च ज्ञानहेतुत्व तत्साध्योद्धूलनस्य पाशुपतव्रताख्यस्य मोक्षविद्याङ्गत्वेन श्रवणात्। यथाथर्वशिरसि— ‘अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । व्रतमेतत्पाशुपत पशुपाशविमोक्षाय’ इति। ज्ञानैकसाध्याया विमुक्तेर्भस्मोद्धूलनक्रियाफलत्वोक्त्या विमोक्षशब्दस्य तत्साधनविद्यापरत्वात् ‘तेषामेवैता ब्रह्मविद्या वदेत शिरोव्रत विधिवद्यैस्तु चीर्णम्’ इति मुण्डकोपनिषद्वचनाच्च। शिरोव्रतपदेनात्र भस्मोद्धूलनस्य विवक्षितत्वात्। शिरोव्रतशब्दस्य भस्मोद्धूलने रूढि स्कान्दान्तर्गत सौरसंहितावचनेन दर्शिता– ‘अग्निरित्यादिभिर्मन्त्रै षड्भिशुद्धेन भस्मना। सर्वाङ्गोद्धूलन कुर्याच्छिरोव्रतसमाह्वयम्’ इति । वासिष्ठलैङ्गेऽपि– ‘बहुनोक्तेन किं भस्मधारण मोक्षसाधनम्। भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यतेऽचिरात्’ इति। एवंभूतेन भस्मनोद्धूलितो विग्रहो यस्य स तथोक्त, तदूलित-

शब्दः 'तत्करोति' इति ण्यन्तात् 'आदिकर्मणि क्तः कर्तरि च' इति चकारात्कर्मणि क्तप्रत्यये उद्धूलित इति रूपम् । एवं च उद्धूलनमुद्गतधूलित्वेन करणम् । यथा च धूलय उद्गच्छन्ति, तथा सान्द्रतया भस्मना सर्वाङ्गाणां संबन्ध इति यावत् । इदं च 'विमृज्याङ्गानि संस्पृशेत्' इति श्रुतौ सम्यगित्यर्थपरेण समित्युपसर्गेण लब्धम् । समित्यस्यैव समन्तादित्यर्थमादाय सर्वाङ्गविषयत्वमुद्धूलनस्य लब्धम् । अत एव सौरसंहितायां सर्वाङ्गोद्धूलनं कार्यमित्युक्तम् । एतदृष्ट्वैवास्मद्दीक्षितैरपि भस्मना सान्द्रसर्वाङ्गसंस्पर्शनात्मकमुद्धूलनं कुर्यादिति शिवार्चनचन्द्रिकायामभिहितम् । आदिकर्मणि क्तप्रत्यय इति व्याख्याने च एवंरूपपाशुपतव्रतस्य शिवेनैव प्रथमं प्रवर्तितत्वात् । अत एव प्रथमं स्वेनाचरितं पश्चात्कुबेरेणेति स्वद्वितीयतया तेन तस्मै सखित्वं दत्तमित्युत्तररामायणे वर्णितम् । यथा—'मया चैतद्व्रतं चीर्णं त्वया चैव नराधिप । तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् । व्रतं सुदुश्चरं ह्येतन्मयैवोत्पादितं पुरा । तत्सखित्वं मया सौम्य रोचय त्वं धनेश्वर' इति । एवं च सकलब्रह्मविद्याङ्गभूतपाशुपतव्रतरूपभस्मोद्धूलनप्रवर्तकतया परमकारुणिक इति सूचितम् ॥ ११ ॥

**सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः ।**
**सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥**

सामप्रिय इति । साम गीतिविशेषः, तत्प्रधानत्वात् वेदोऽपि साम, तत्प्रिय इत्यर्थः । 'ईशानः सर्वविद्यानाम्' इति श्रुतिसिद्धसर्वविद्याधिपत्यस्य शिवस्य 'ऋचो ह यो वेद स वेद देवान्यजूंषि यो वेद स वेद यज्ञान् । सामानि यो वेद स वेद सर्वम्' इति श्रुतिसिद्धमहिम्नि सामवेदे प्रीत्यौचित्यात् । साम्नोऽभ्यर्हितत्वादेव श्राद्धप्रकरणे स्मर्तारः— 'त्रयाणामप्यलाभे तु छन्दोगं तत्र पूजयेत्' इति बहूनां ब्राह्मणानां स्थाने छन्दोगमेकं विदधति । अत एव गीतासु— 'वेदानां सामवेदोऽस्मि' इति भगवता विभूतिषु परिगणितम् । सामप्रियत्वादेव भारते उपमन्यूपाख्याने उपमन्युकृत शिवसाक्षात्कारोपायवर्णने ब्रह्मनारायणाभ्यां रथंतरसाम्ना ज्येष्ठसाम्ना च स्तुतमित्युक्तम् । यथा— 'ब्रह्मा भव तदास्तौषी-द्रथंतरमुदीरयन् । ज्येष्ठसाम्ना च देवेशं जगौ नारायणः प्रभुः' इति । यद्वा, साम सान्त्वं मधुरोक्तिरित्यर्थः, तत्प्रियः; सर्वत्र सान्त्ववादप्रयोगस्य शिवप्रीतिहेतुतया शिवधर्मोत्तरे स्मरणात् । यथा— 'अमृतस्यन्दिनीं वाचं चन्दनस्पर्शशीतलाम् । सर्वत्रैव प्रयुञ्जानः शिवलोके महीयते' इति ॥४२॥

स्वरमय इति । स्वरो नाम अच्, स चात्र प्रणवरूपः, सामान्यशब्दस्य विशेषे पर्यवसनात्; 'यो वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः' इति प्रयोगदर्शनाच्च । यद्यपि प्रणवो मकारेण सहैव स्वरव्यञ्जनसमुदायश्च न स्वरः, तथापि स्वरस्य द्वे मात्रे व्यञ्जनस्यार्धमात्रेति स्वरांशस्य भूयस्त्वात्स्वरत्वेन व्यपदेशः । स्वरस्यावयवः स्वरमयः 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति सूत्रेण सर्वस्मादपि शब्दाद्विकारावयवयोरर्थयोर्मयड्भवतीत्यर्थकेन मयटोऽनुशासनात्साधुः । प्रणवावयवत्वं च तथाभूतमकारेण गुणिरुद्रस्य प्रतिपादनात् मकारात्परयार्धमात्रया नादाख्यया त्रिमूर्त्युत्तीर्णस्य महेश्वरस्य प्रतिपादनाद्वा वाच्यवाचकयोरभेदाध्यवसायेन तद्वाच्यस्य तद्व्यपदेशौचित्यात् । यथोक्तं वायवीयसंहितायाम्— 'प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रादिशब्दाना प्रणवः परमः स्मृतः ॥ तस्मादेकाक्षरं देवमाहुरागमपारगाः । वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ॥ अस्य मात्राः समाख्यातास्तस्रो वेदमूर्धनि । अकारश्चाप्युकारश्च मकारो नाद इत्यपि ॥ अकारं बह्वृचं प्राहुरुकारो यजुरुच्यते । मकारः साम नादोऽस्य श्रुतिराथर्वणी स्मृता ॥ अकारस्तु महाबीजं रजः स्रष्टा चतुर्मुखः ।

उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ॥ मकारः पुरुषो बीजं तमः संहारको हरः । नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥ एवं तिसृभिरेवैष मात्राभिर्निखिलं त्रिधा । अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ' इति । अयमर्थश्च 'यो वेदादौ ' इति श्रुतिमुदाहृत्य योगयाज्ञवल्क्यवचनाद्यनुसारेण प्रपञ्चितः शिवतत्त्वविवेकेऽस्मद्दीक्षितैरिति नेह प्रपञ्च्यते ॥ ४३ ॥

त्रयीमूर्तिरिति । ऋग्यजुःसामरूपैस्त्रिभिरवयवैर्घटितः समुदायः त्रयी, 'संख्याया अवयवे तयप्' 'द्वित्रिभ्यां तयस्या यज्वा' इत्ययजादेशः, ङीत्वं स्वाभाव्यात्; 'इति वेदास्त्रयस्त्रयी' इति निघण्टुः । सा मूर्तिरस्येति बहुव्रीहिः । 'शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः' इति शिवपुराणोक्तरीत्या नामात्मकप्रपञ्चस्य देवीमूर्तितया तन्मुखेन शिवमूर्तित्वोपपत्तेः । विशिष्य च त्रय्या देवीमूर्तित्वं कूर्मपुराणे हिमवन्तं प्रति देवीवचनेन दर्शितम्— 'ममैवाद्या परा मूर्तिर्वेदसंज्ञा सनातनी । ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ' इति । यद्यपि चत्वारोऽपि वेदास्तस्यैव मूर्तिः, तथापि मूर्तिशब्दस्यात्र प्रेमास्पदत्वपरतया तुरीयवेदस्य प्रायेणाभिचारबहुलतया अप-

भंजनके तदर्थाचरणे त्र्यम्बकाचरणवन्न प्रीतिः परमेश्वरस्येति त्रयीमूर्तिरित्युक्तम् । अत एवोदाहृतकौर्मवचने त्र्यम्बाम् 'परा मूर्तिः' इति इष्टवाची परशब्दः प्रयुक्तः । 'विप्रतिषेधे परं कार्यम्' इति सूत्रे इष्टवाची परशब्द इति महाभाष्योक्तेः । उत्कृष्टवाची वा परशब्दः, उत्कर्षश्च इष्टत्वमेव ॥ ४४ ॥

अनीश्वर इति । न विद्यते ईश्वरोऽस्येति बहुव्रीहिः, 'न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति श्रुतेः । इदं च नामत्वेनैव श्रुतौ प्रसिद्धम् । यथा— 'भावग्राह्यमनीशाख्यं भावाभावकरं शिवम्' इति ॥ ४५ ॥

सर्वज्ञ इति । सर्वं जानातीति सर्वज्ञः, 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः; 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः', 'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः' इत्यादिश्रुतेः ॥ ४६ ॥

परमात्मेति । परमः उत्कृष्ट आत्मा परमात्मा, पारम्यं च सर्वजीवानामन्तर्यामितया नियन्तृत्वम् । तथा च श्रुतयः— प्रथमं तावत्सर्वगतत्वे— 'ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारमीशं तं

ज्ञात्वामृता भवन्ति' 'यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोऽस्तु' 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' 'सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारं तमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः । यस्मिन्युक्ता ऋषयो देवताश्च तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽस्तु' इत्यादय । 'नमो दुन्दुभ्याय च' इत्यादयश्च 'भवे छन्दसि' इति विहितयत्प्रत्ययान्ता अनुवाकद्वयोपात्ता नियम्यनियामकयोरभेदोपचारेण प्रवृत्ताः । 'कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो नमः' इत्यादयश्च, तथा 'यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतिभिरुक्तस्य नारायणव्यापकत्वस्य नारायणस्यैव शिवांशतया शिवव्यापकत्वपर्यवसानबोधिका मन्त्रोपनिषद्गता 'माया तु

प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्' इति श्रुतिश्च, तथा 'धियो यो नः प्रचोदयात्' इति मन्त्रलिङ्गप्रतिपन्नसर्वान्तर्यामि-भावाया सवितृमण्डलमध्यवर्तिमूर्तेः शिवत्वप्रतिपादनपरा 'असौ योऽवसर्पति नीलग्रीवो विलोहितः' इत्यादिश्रुति गायत्रीगतभर्गश्रुति 'य एषोऽन्तरादित्ये' इत्यादिश्रुतयश्च प्रमाणानि । सर्वाधिष्ठातृत्वे 'यो योनिं योनिमधितिष्ठत्ये-को यस्मिन्निदं सञ्चविचैति विश्वं तमीशानं वरदं देवमी-ड्यम्' 'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी स-र्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' इत्यादयः । स्मृतयस्तु भारतभागवताद्यो विस्तरभयाद्विस्पष्ट-त्वाच्च न लिख्यन्ते । शिवपुराणागमप्रसिद्धेषु शिवाद्यष्टनामसु उत्तममिदं नाम 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः' इति वायुसंहिता-वचनात् ॥ ४७ ॥

सोमसूर्याग्निलोचन इति । तेजस्त्वेन त्रयाणां साम्ये ऽपि प्रागुदाहृतवराहपुराणोक्तरीत्या सोमस्य सर्वजीवसमष्टि-रूपतया अभ्यर्हितत्वेन पूर्वनिपातः, अन्यथा 'द्वन्द्वे घि' इति अग्निशब्दस्यैव पूर्वनिपातः स्यात्, न च बहुषु अनियमः,

ज्ञात्वामृता भवन्ति ' 'यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोऽस्तु' 'सर्वाननशिरोग्रीव सर्वभूतगुहाशय । सर्वव्यापी च भगवास्तस्मात्सर्वगत शिव ' 'सूक्ष्मातिसूक्ष्म कलिलस्य मध्ये विश्वस्य स्रष्टार तमनेकरूपम् । विश्वस्यैक परिवेष्टितार ज्ञात्वा शिव शान्तिमत्यन्तमेति ॥ स एव काले भुवनस्य गोप्ता विश्वाधिप सर्वभूतेषु गूढ । यस्मिन्युक्ता ऋषयो देवताश्च तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ घृतात्पर मण्डमिवाति सूक्ष्म ज्ञात्वा शिव सर्वभूतेषु गूढम् । विश्वस्यैक परिवेष्टितार ज्ञात्वा देव मुच्यते सर्वपाशै ' 'सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽस्तु' इत्यादय । 'नमो दुन्दुभ्याय च' इत्यादयश्च 'भवे छन्दसि' इति विहितयत्प्रत्ययान्ता अनुवाकद्वयोपात्ता नियम्यनियामकयोरभेदोपचारेण प्रवृत्ता । 'कुलालेभ्य कर्मारेभ्यश्च वो नमो नम पुञ्जिष्ठेभ्यो निषादेभ्यश्च वा नमो नम ' इत्यादयश्च, तथा 'यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित ' इत्यादिश्रुतिभिश्च नारायणव्यापकत्वस्य नारायणस्यैव शिवाशतया शिवव्यापकत्वपर्यवसानबोधिका मन्त्रोपनिषद्वा 'माया तु

प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्' इति श्रुतिश्च, तथा 'धियो यो नः प्रचोदयात्' इति मन्त्रलिङ्गप्रतिपन्नसर्वान्तर्यामिभावायाः सवितृमण्डलमध्यवर्तिमूर्तेः शिवत्वप्रतिपादनपरा 'असौ योऽवसर्पति नीलग्रीवो विलोहितः' इत्यादिश्रुतिः गायत्रीगतभर्गश्रुतिः 'य एषोऽन्तरादित्ये' इत्यादिश्रुतयश्च प्रमाणानि । सर्वाधिष्ठातृत्वे 'यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं संचविचैति विश्वं तमीशानं वरदं देवमीड्यम्' 'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' इत्यादयः । स्मृतयस्तु भारतभागवतादयो विस्तरभयाद्विस्पष्टत्वाच्च न लिख्यन्ते । शिवपुराणागमप्रसिद्धेषु शिवाष्टनामसु उत्तमिदं नाम 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः' इति वायुसंहितावचनात् ॥ ४७ ॥

सोमसूर्याग्निलोचन इति । तेजस्त्वेन त्रयाणां साम्येऽपि प्रागुदाहृतवराहपुराणोक्तरीत्या सोमस्य सर्वजीवसमष्टिरूपतया अभ्यर्हिततत्वेन पूर्वनिपातः, अन्यथा 'द्वन्द्वे घि' इति अग्निशब्दस्यैव पूर्वनिपातः स्यात्; न च बहुषु अनियमः,

'अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे' इति हि तद्वार्तिकमाकरे पठ्यते । ततश्चाभ्यर्हितत्वात्प्रथमस्य नियमे सिद्धे द्वितीयस्य च 'द्वन्द्वे घि' इति नियमाभावमात्रप्रतिपादनात् । भगवल्लोचनानां तेजस्त्रयात्मकत्वं चानुशासनिके उपमन्यूपाख्याने दर्शितम्, यथा— 'दिवसकरशशाङ्कवह्निनेत्र त्रिभुवनसारमपारमीशमाद्यम् । अजरममरमप्रसाद्य रुद्र जगति पुमानिह को लभेत शान्तिम्' इति, शिवागमेष्वपि 'स्फुटितनलिनसंस्थं चन्द्रवह्न्यर्कनेत्रम्' इति ॥ ४८ ॥

**हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः ।**
**विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥**

हविरिति । प्रायेण हूयमानद्रव्याणां पार्थिवत्वात्पृथिव्याश्च भगवन्मूर्तिषु प्रथमत्वाद्धवीरूपत्वम्, अथवा 'रमजाता महादेवी देवो रमयिता शिवः' इति शिवपुराणोक्तरीत्या भोक्तव्यवस्तुमात्रस्य देवीरूपतया तदभेदाद्धवीरूपत्वम् । एतद्दृष्ट्यैवोक्तं भगवद्गीतासु— 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना' इति ॥ ४९ ॥

यज्ञमय इति । यज्ञाः क्रतवः, प्राचुर्येण प्रस्तुताः अस्मिन्निति यज्ञमयः, 'तत्प्रकृतवचने मयट्' इति मयट् । स्वामिनि

हि स्वं प्रायेण प्रस्तुत भवति, यज्ञस्वामीत्यर्थः । तथा च श्रुतिः— 'आवो राजानमध्वरस्य रुद्रम्' इति ॥ ५० ॥

सोम इति । उमया सहितः सोमः, 'उमासहायं परमेश्वरं प्रभुम्' इति श्रुतेः ; यद्वा सोमो लताविशेषः, तदभिमानित्वाच्छिवोऽपि सोमः ; सोमलतायाः शिवाधिष्ठितया तत्तादात्म्यदृष्ट्यैव 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः न कारणं कारणानां धाता ध्याता कारणं तु ध्येय. सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यथर्वशिरसि प्रतिपन्नं शिवस्य जगत्कारणत्वम् सोमलतायामारोप्य मन्त्र स्तौति 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्या जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' इति । अत एव 'अय सोमः कपर्दिने' इति श्रुतिरप्युपपन्ना । शरीरशरीरिभावलक्षणसंबन्धप्रतिपादनाय षष्ठ्यां प्रयोक्तव्यायां तत्स्थाने 'छन्दसि षष्ठ्यर्थे चतुर्थी वक्तव्या' इति वार्तिकेन चतुर्थ्याः प्रयोगात् । तथा चोक्तं स्कान्दे सनत्कुमारसंहितायां काशीगतादाल्म्येश्वरलिङ्गकथाप्रस्तावे— 'मतीनां च दिवः पृथ्व्या वह्नेः सूर्यस्य वज्रिणः । साक्षादपि च विष्णोश्च सोमो जनयितेश्वरः ॥ एवं जातः पुनः सोमः पुनाति सकलाघतः । सोमो वै ह्यात्मनः सोममात्मानं वेत्ति

शंकरः' इति । आत्मनः स्वस्यात्मानं शरीरं सोमलताविशेषं सोमः उमासहितः शंकरो वेत्तीति तदर्थात् । यद्वा, सोमशेपित्वात्सोमः 'राजा राष्ट्रम्' इतिवत्, शेषशेषिणोरभेदव्यपदेशौचित्यात् । एवं च 'अथ सोमः कपर्दिने' इति तादर्थ्यचतुर्थ्युपपद्यते । 'रुद्र आ हुतः' इति सोमाहुते रुद्रदैवत्यश्रवणमपि अत्र प्रमाणम् । अत एव सनत्कुमारसंहितायामुक्तम्— 'सोमेन सोममाराध्यं पीत्वा शेषं शिवस्य तम् । जानामि सम्यक् सोमं शिवं शंभुं महेश्वरम्' इति ॥ ५१ ॥

पञ्चवक्त्र इति । प्रदक्षिणं कुर्वंल्लोकस्तिलोत्तमाया दिदृक्षया चतसृषु दिक्षु उत्पादितानि चत्वारि मुखानि प्रागवस्थितमूर्ध्वमुखमेकमित्याहत्य पञ्च वक्त्राणि यस्य स पञ्चवक्त्रः इति बहुव्रीहिः; यद्यपि मत्वर्थे बहुव्रीहिः, अन्यथा 'उक्तार्थानामप्रयोग.' इति 'न बहुव्रीहिरन्यस्मिन्नर्थे भवन्ति मतुबादयः' इति निषेधाप्रसक्ते ; मत्वर्थश्च तद्धितार्थः, तथा च 'दिक्संख्ये संज्ञायाम्' इत्यनुवृत्तौ 'तद्धितार्थोत्तरपदसमाहारे च' इति सूत्रेण पञ्चसु कपालेषु संस्कृत इति संस्कृतत्वरूपतद्धितार्थविवक्षायामिव पञ्च वक्त्राण्यस्य सन्तीति मत्वर्थरूपतद्धितार्थविवक्षायामपि द्विगुना भवितव्यम्; न

च सस्कृताद्यर्थेषु सावकाशो द्विगुः दिक्संख्याव्यतिरिक्तस्थले चित्रगुरित्यादौ सावकाशो बहुव्रीहिरिति द्वयोः सावकाशयोः परत्वाद्बहुव्रीहिरेव भविष्यतीति वाच्यम्, शेषो बहुव्रीहि.' इति शेषग्रहणात् समासान्तरविषये बहुव्रीहेरप्रसक्तेः, नापि अस्तु द्विगुः किं तत इति वाच्यम्; द्विगौ हि सति तद्धित उत्पद्येत षाण्मातुर इतिवत्; न च तस्य लोपो लभ्य, 'द्विगोर्लुगनपत्ये' इत्यस्य प्राग्दीव्यतीयविषयत्वात् 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इत्यस्य आर्हीयविषयत्वान्मत्वर्थस्य चोभयबहिर्भूतत्वादिति, तथापि 'सर्वत्र मत्वर्थे प्रतिषेधो वक्तव्य' इति वार्तिकेन 'प्रत्ययोत्तरपदयोश्च' इति तर्कितन्यासे 'तद्धितार्थोत्तरपदसमाहारे च' इति यथाश्रुतन्यासे च सर्वत्र मत्वर्थरूपतद्धितार्थे विषयीभूते द्विगुसमासप्रतिषेधो वक्तव्य इत्यर्थकेन द्विगोः प्रतिषेधाद्बहुव्रीहिरेवायमिति तत्त्वम्। तिलोत्तमादिदिदृक्षाप्रयुक्तमुखचतुष्टयसृष्टिश्चानुशासनिके उमामहेश्वरसंवादे दर्शिता। यथा— 'उमा— भगवन्देवदेवेश सर्वदेवनमस्कृत। चतुर्मुखो वै भगवानभवत्केन हेतुना॥ भगवन्केन ते वक्त्रमैन्द्रमद्भुतदर्शनम्। उत्तरं चापि भगवन्पश्चिमं शुभदर्शनम्॥ दक्षिणं च मुखं रौद्रं केनोर्ध्वं जटिलावृतम्। यथा-

दिश महादेव श्रोतुमिच्छामि कारणम् ॥ एष मे सशयो देव तन्मे शंसितुमर्हसि । महेश्वर – तदहं ते प्रवक्ष्यामि यत्त्वमिच्छासि भामिनि। पुरा महासुरौ घोरौ लोकोद्वेगकरौ भृशम् । सुन्दोपसुन्दनामानावासतुर्बलगर्वितौ ॥ अशस्त्रवध्यौ बलिनौ परस्परहितैषिणौ। तयोरेव विनाशाय निर्मिता विश्वकर्मणा ॥ सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता । तिलोत्तमेति विख्याता अप्सरा सा बभूव ह ॥ देवकार्यं करिष्यन्ती हासभावसमन्विता । सा तपस्यन्तमागम्य रूपेणाप्रतिमा भुवि ॥ मया बहुमता चेयं देवकार्यं करिष्यति । इति मत्वा तदा चाहं कुर्वती मां प्रदक्षिणम् ॥ तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये। ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा । दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः । लोककार्यकरं नित्यं पश्चिमं मे मुखं प्रिये। वेदानधीते सततं मद्भुतं चोत्तरं मुखम् । एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ' इति। रूपेणाप्रतिमा सेयं तिलोत्तमा तपस्यन्तं मामागम्योपसृत्य प्रदक्षिणं कुर्वती, अत एव मया बहुमता च सती देवकार्यं करिष्यतीति मत्वा तदाहं स्थित इत्यध्याहारेण वाक्यपूरणम् । यथा मया चिन्तितं तथैव मामुपसृत्य प्रदक्षिणीकृत्य मत्प्रसादबलेन देवकार्याणि साधयितुं प्रवृत्ता ।

तां दिदृक्षुः द्रष्टुमिच्छुः चतुर्वक्त्रोऽभवमित्यर्थः । तथैवेति च साभिप्रायं विशेषणम्—'यत एषा मच्चित्तानुरूपमेव ' प्रद-क्षिणीकृत्य शशाङ्कशेखरं प्रयास्यतः कस्य न सिद्धिरमतः' इति पुराणार्थतत्त्वं विज्ञाय मामुपागतवती, अतस्तां दिदृक्षुरिति ; न ह्यन्यथा अप्राकृतसौन्दर्यनिधानभूतामम्बामपि साधनं कृत्वा प्रवृत्तेन साक्षान्मदनेनापि चालयितुमशक्यस्य ज्ञानवैराग्य-तप.सत्यादिदिव्यमङ्गलगुणगणालंकृतस्य भगवतो महेश्वरस्य प्राकृतसौन्दर्यमात्रशालिन्या तिलोत्तमया प्रलोभनं कर्तुं शक्यमिति भावः । एतेन एवं स्वकार्योद्देशेनापि भक्तिं कुर्वती तिलोत्तमा नैरन्तर्येण द्रष्टुमेकं मुखं नालमित्यलन्तौ-त्सुक्येन यश्चतुर्वक्त्रोऽभवत्, स परमेश्वरः सात्त्विकभक्तेषु कियत्रानुकम्पत इति कैमुतिकन्यायेन निरतिशयं भक्तवात्सल्यं सूचितम् । एतदेव च तिलोत्तमादिदृक्षाप्रयुक्तमुखचतुष्टयसृष्टिप्रतिपादनपरस्य भारतवचनस्यापि तात्पर्यविषयः ; अन्यथा सदाशिवीयपञ्चमुखानामनादित्वेन सकलशिवपुराणागमप्रसिद्धानां मध्ये मुखचतुष्टयस्यागन्तुकत्वकथनानुपपत्तेः । तानि च पञ्च मुखानि ईशानतत्पुरुषाघोरवामदेवसद्योजाताख्यपञ्चब्रह्मात्मकानि, तानि च पञ्च ब्रह्माणि भूतपञ्चकतन्मात्रपञ्चककर्मेन्द्रियपञ्चकज्ञानेन्द्रियपञ्चकपुरुषप्रकृ-

विसुद्धयहकारमनोरूपतत्त्वपञ्चकनिवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्यकलापञ्चकब्रह्मविष्णुरुद्रमहेश्वरसदाशिवाख्यमूर्तिपञ्चकशिवमादारयामूर्तसादाख्यमूर्तसादाख्यकर्तृसादाख्यकर्मसादाख्यमादारयपञ्चकात्मकानीति शिवपुराणागमेषु प्रसिद्धम् । यथोक्तं वायवीयसंहितायाम्— 'ब्रह्मा विष्णुस्तथा रुद्रो महेशानः सदाशिवः । मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ॥ अथान्याश्चापि तनवः पञ्चब्रह्मसमाह्वयाः । तनुभिस्ताभिरव्याप्तमिह किंचिन्न विद्यते ॥ ईशानः पुरुषोऽघोरो वामः सद्यस्तथैव च । ब्रह्माण्येतानि देवस्य मूर्तयः पञ्च विश्रुताः ॥ ईशानाख्या तु या तस्य मूर्तिराद्या गरीयसी । भोक्तारं प्रकृतेः साक्षात्क्षेत्रज्ञमधितिष्ठति ॥ स्थाणोस्तत्पुरुषाख्या या मूर्तिर्मूर्तिमतः प्रभोः । गुणत्रयात्मकं भोग्यमव्यक्तमधितिष्ठति ॥ धर्माद्यष्टाङ्गसंयुक्तं बुद्धितत्त्वं पिनाकिनः । अधितिष्ठत्यघोरात्मा मूर्तिरत्यन्तमूर्जिता ॥ वामदेवाह्वया मूर्तिर्महादेवस्य वेधसः । अहङ्कृतेरधिष्ठात्रीत्याहुरागमवेदिनः ॥ सद्योजाताह्वया मूर्तिं शम्भोरमिततेजसः । मनसः समधिष्ठात्री मतिमन्तः प्रचक्षते ॥ श्रोत्रस्य वाचश्शब्दस्य विभोर्व्योम्नस्तथैव च । ईश्वरीमीश्वरस्यैनामीशानाख्यां विदुर्बुधाः ॥ त्वक्पाणिस्पर्शवायूनामीश्वरीं मूर्तमैं

श्वरीम् । पुरुषाख्यां विदुः पूर्वे पुराणार्थविशारदाः ॥
चक्षुपश्चरणस्यापि रूपस्यास्तथैव च । अघोराख्यामधि-
ष्ठात्रीं मूर्तिमाहुर्मनीषिण ॥ रसनायाश्च पायोश्च रस-
स्यापां तथैव च । ईश्वरीं वामदेवाख्यां मूर्तिं मुनिवरा
विदु. ॥ घ्राणस्य चैवोपस्थस्य गन्धस्य च भुवस्तथा ।
सद्योजाताह्वया मूर्तिमीश्वरीं संप्रचक्षते' । पुनस्तत्रैव प्रदेशा-
न्तरे स्तोत्राध्याये— 'शुद्धस्फटिकसंकाशमीशानाख्य सदा-
शिवम् । मूर्धाभिमानिनी मूर्ति. शिवस्य परमात्मन: ॥
शिवार्चनरतं शान्तं शान्त्यतीतं समास्थितम् । पवित्र पञ्चमं
ब्रह्म प्रार्थित मे प्रयच्छतु । बालसूर्यप्रतीकाश पुरुषाख्यं
पुरातनम् । पूर्ववक्त्राभिमान च शिवस्य परमेष्ठिन. । शान्त्या-
त्मकं मरुत्सस्थम्' इत्यादि । 'अञ्जनाद्रिप्रतीकाशमघोर
घोरविग्रहम् । देवस्य दक्षिण वक्त्र देवदेवपदार्चकम् ॥
विद्यापदसमारूढम्' इत्यादि । 'कुङ्कुमक्षोदसंकाशं वामाख्यं
वरवेषधृक् । वक्त्रमुत्तरमीशस्य प्रतिमाया प्रतिष्ठितम्'
इत्यादि । 'शङ्खकुन्देन्दुधवलं सद्याख्य सौम्यलक्षणम् ।
शिवस्य पश्चिम वक्त्र शिवपादार्चने रतम् । निवृत्तिपद-
निष्ठं च पृथिव्या समवस्थितम्' इत्यादि । तथा शिवागमेषु—
सदाशिवात्मा व्योमस्थ ईशान· परिकीर्तित. । वश्यकृद्ब्रह्म-

वाहस्थ ईश्वरः पुरुषः स्मृतः ॥ अशेषाघहरः पुंमामघोरो रुद्रविग्रहः । वामदेवः प्रवालाभो देवो वारिस्थितो हरिः ॥ शान्तिकृत्पृथिवीसंस्थः सद्योजातः पितामहः' इति। सादाख्य-स्वरूपं तद्रहस्यं च सर्वागमेषु बहुधा प्रपञ्चितम् । बहु चात्र वक्तव्यमिति विस्तरभयान्न लिख्यते । तत्रायं संग्रहो ऽस्मद्दीक्षितप्रणीतायां शिवध्यानपद्धतौ; यथा— 'विशुद्ध शिवसादाख्यं विशुद्धन्दमिवाम्बरे । विश्वतः स्फुरित ज्योति-र्विद्यादूर्ध्वंमुख विभो ॥ अमूर्तमपि सादाख्यं मूलस्तम्भ इति श्रुतम् । ज्योतिस्तम्भमयं लिङ्गं स्मरेदस्योत्तरं मुखम् ॥ ज्योतिर्लिङ्गैकमागोलयमेकवक्त्रं त्रिलोचनम् । मूर्तं सादा ख्यमित्युक्तं ध्यायेत्पश्चिममाननम् ॥ शूलं च परशुं वज्रम-भीतिं दक्षिणैः करैः । पाशं वह्निं च घण्टां च वरं वामै करैरपि ॥ ध्यानं कर्तृसादाख्यं चतुर्वक्त्राम्बुजोज्ज्वलम् । लिङ्गमध्ये समुद्भूतं संस्मरेद्दक्षिणाननम् ॥ पञ्चवक्त्रं दश-भुजं पीठलिङ्गसमुद्भवम् । प्रसिद्धं कर्मसादाख्यं पुरारेः पूर्व-माननम्' इति । शिवस्य सर्वदिक्षु वदनसद्भावे 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इति मन्त्रोपनि-षद्रूतमन्त्रलिङ्गमेव लिङ्गम् । एतेन च सर्वात्मक इत्युक्तं भवति ॥ ५२ ॥

सदाशिव इति । सदा सर्वकालेषु वर्तमानः शिवः सदाशिवः, किं कादाचित्कोऽपि शिवोऽस्ति? यद्व्यावृत्तये सदेति विशेषणम्, अस्तीत्याह— तत्र ब्रह्मविष्णुरुद्रमहेश्वरमूर्तीनामुत्तरोत्तरचिरकालवर्तित्वेऽपि सदाशिवाख्यपञ्चममूर्त्यपेक्षया कादाचित्कीं रुद्रमूर्तिं व्यावर्तयितुं सदेति विशेषणोपादानसंभवात् । उक्तं चेदं शिवपुराणे सृष्टिप्रकरणे— 'केन मानेन कालेऽस्मिन्नायुः संख्या प्रवर्तते' इति पृच्छतः ऋषीन्प्रति वायुवचने यथा— 'आयुषोऽत्र निमेषाख्यमादिमानं प्रचक्षते । संख्यानमस्य कालस्य शान्त्यतीतकलावधि ॥ अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः । तादृशानां निमेषाणां काष्ठास्तु दश पञ्च च' इत्यादिना, 'चतुर्युगसहस्रं यत्तत्कल्प इति कथ्यते' इत्यन्तेन प्रसिद्धं कल्पपरिमाणमुक्त्वा पुनर्वर्णितम्— 'कल्पो नाम दिवा प्रोक्तं ब्रह्मणोऽव्यक्तजन्मनः । कल्पानां वै सहस्रं तु ब्राह्मं वर्षमिहोच्यते ॥ वर्षाणामष्टसाहस्रं यत्तद्ब्रह्मणो युगम् । सवनं युगसाहस्रं ब्रह्मणः पद्मजन्मनः ॥ सवनानां सहस्रं तु त्रिगुणं त्रिविधं तथा । कल्प्यते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥ तस्य वै दिवसे यान्ति चतुर्दश पुरंदराः । ब्रह्मा विष्णुदिने चैको विष्णू रुद्रदिने तथा ॥ ईश्वरस्य दिने रुद्रः सदाख्यस्य

तथेश्वरः । साक्षाच्छिवस्य तत्संख्यस्तदा सोऽपि सदाशिवः ॥ तस्मिन्साक्षाच्छिवेनैव कालात्मा संप्रवर्तितः' इति । अयमर्थः— कल्पः प्रसिद्धः, तादृक्कल्पसहस्रमेको वत्सरः, तादृशवत्सराणामष्टसाहस्राण्येकं युगम्, तादृशयुगसहस्रमेकं सवनम्, तादृशसवनसहस्राणि त्रिगुणानि सन्ति त्रिविधानि नवसंख्यानीति यावत् । सहस्रस्य प्रथमं त्रैगुण्ये त्रीणि सहस्राणि, तत्सहस्याखिसाहस्रता पुनस्त्रैगुण्ये नवसाहस्र्यां पर्यवसानात् । एवं च तादृशसवनानां नवसहस्रं ब्रह्मण परमायु' । तादृशब्रह्मपरमायुर्विष्णोरेकादिनम्, तादृशविष्णुपरमायु. रुद्रस्यैकदिनम्, तादृशरुद्रपरमायु महेश्वरस्यैकादिनम्, तादृशमहेश्वरस्य परमायु सदाशिवस्यैकदिनम्, तादृशसदाशिवपरमायुः परमशिवस्यैक दिनम्, परमशिवस्य कालकृतपरिच्छेद एव नास्तीति । अत एव प्रदेशान्तरेऽपि तत्रैव, 'कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेशः कालावच्छेदवर्जित' इति । यद्यप्युदाहृतवचनै. सदाशिवस्यापि कादाचित्कत्वमागतमिति सदेति विशेषणानन्वयः, तथापि ब्रह्माद्यपेक्षया अधिककालवर्तित्वेन ब्रह्मादिकालेषु सदा वर्तत इति तदभिप्रायो बोध्य. । यद्वा परमशिवे वा केवलयौगिकोऽयं द्रष्टव्यः । तत्र कालावच्छेदराहिते सदा-

पदसाधनस्यात् । न च तस्यापि कालावच्छेदोऽस्त्येव; अन्यथा सदाशिवस्य परमायु परमशिवस्य दिनमिति परिच्छिन्नव्यवहारायोगादिति वाच्यम् । दिनव्यवहारस्य दिनवदतिक्षुद्र काल इत्यौपचारिकतया प्रवृत्तत्वात् । अत एवोक्तं तन्त्रैव किंचिदुत्तरतः— 'अहर्न विद्यते तस्य न रात्रिरिति धारयेत् । उपचारस्तु क्रियते लोकाना हितकाम्यया' इति । तथा पाद्मे शिवराघवसंवादेऽपि सदाशिववचने दर्शितम्— 'अल्पायुर्दृश्यते ब्रह्मा द्वौ नि श्वासौ हि जीवितम् । चतुर्नि.श्वासमात्र तु विष्णोरायुरुदाहृतम्' इति । इयं च नि श्वाससख्या सदाशिवायुरपेक्षया द्रष्टव्या । एवं पुराणान्तरेष्वपि । इद च श्रुतिप्रसिद्धं नाम 'ब्रह्मा शिवो मेऽस्तु सदाशिवोम्' इति ॥ ५३ ॥

विश्वेश्वर इति । विश्वेषामीश्वर विश्वेश्वर. । तथा च मन्त्रोपनिषदि 'भूय. सृष्ट्वा पतयस्तथेश· सर्वाधिपत्यं कुरुते महात्मा' इति । तैत्तिरीयकेऽपि 'पतिं विश्वस्यात्मेश्वर शाश्वतं शिवमच्युतम्' इति च । ननु 'स्वामीश्वर' इति सूत्रेण षष्ठ्या प्रतिपदविहितत्वात् 'प्रतिपदविधाना षष्ठी न समस्यते' इति निषेधात् कथ समास इति चेत्, न, नेयं प्रतिपदविधाना षष्ठी, किं तु शेषषष्ठ्येव, पर तु प्रतिपदवि-

द्वितया सप्तम्या मा बाधीति शेषपष्ठ्येव चकारेणानुज्ञायते। इदं चार्थतः श्रुतिप्रसिद्ध नाम 'सर्वेश्वरः शंभुराकाशमध्ये' इति ॥ ५४ ॥

वीरभद्र इति। भद्रो नाम दक्षाध्वरध्वंसार्थं रुद्रेणोत्पादितो गणविशेषः। वीरश्चासौ भद्रश्च इति कर्मधारय.। तस्य चोत्पत्तिः कल्पभेदेन बहुधा। तथा हि ब्रह्माण्डपुराणोत्तरभागे हयग्रीवागस्त्यसंवादे ललितोपाख्याने शिवललाटजस्वेदबिन्दो. भद्रस्योत्पत्तिः ततो गणानामुत्पत्तिश्च दर्शिता। यथा— 'अथ देवो महादेवो ललाटतटसंभवम्। एकं स्वेदपयोबिन्दुं नखाग्रेणाक्षिपत्क्षितौ ॥ तत तत्तस्थिवानेको लोकघस्मरविग्रहः। कालाग्निरिव दीप्ताक्षो वीरभद्रो गणेश्वर ' इति। 'वीरभद्रः स कैलासान्निर्जगाम महाजव' । तस्यैव रोमकूपेभ्यो दीप्ताक्षिटिललोचनात्॥ कर्णाभ्यां चैव नासाभ्यामास्याद्भ्रूभयंकरात्। प्रसूता बहवो लोकघस्मराः प्रमथेश्वरा' ' इति। वामनपुराणे तु क्रुद्धस्य शिवस्य शरीरनिःसृतात्तेजस सह गणैर्वीरभद्र उत्पन्न इति दर्शितम्। यथा— 'एतच्छ्रुत्वा वचो रौद्रं रुद्रः कोपान्वितोऽभवत्। क्रुद्धस्य सर्वगात्रेभ्यो नि सेरु. सहस्रार्चिष.॥ सह क्रोधाग्निनेत्रस्य गात्ररोमान्तरोद्भवाः। गणाः मांल्यमुखा जाता वीरभद्रपु-

रोगमा ' इति । वायवीयसंहितायां तु दक्षयज्ञार्थं गत्वा तद्वृत्तान्तश्रवणकुपितया देव्या प्रेरितेन शिवेन संमुग्धवया वीरभद्रस्य सृष्टिमुक्त्वा देव्यापि कुपितया भद्रकाली सृष्टा, तया सहितो वीरभद्रः कार्याण्यसाधयदित्युक्तम् । यथा— 'दग्धुं दक्षाध्वारं विप्रा देवी देवमचोदयत् । देव्या संचोदितो देवो दक्षाध्वरजिघांसया ॥ ससर्ज सहसा वीरं वीरभद्रं गणेश्वरम् । सहस्रवदनं देवं सहस्रचरणेक्षणम्' इति; तथा— 'मन्युना चासृजद्भद्रां भद्रकालीं महेश्वरी । आत्मनः कर्मसाक्षित्वात्तेन गन्तुं सहैव तु ॥ तं दृष्ट्वावस्थितं वीरभद्रं कालाग्निसंनिभम् । भद्रया सहित प्राह भद्रमस्त्विति शंकरः' इति । एतेन भद्रया सहितत्वाद्भद्रावान्भद्र इति मत्वर्थीयाकारेण भद्रशब्दो निष्पन्न इति व्युत्पत्तिरपि सूचिता । काशीखण्डे तु— 'ततस्तत्क्रोधजाद्दहे राविराम महाद्युतिः । भद्रस्तु प्रमथाकारः कालमृत्युप्रकम्पनः ' इति । शिवकोपाग्नेरुद्भवो भद्र इत्युक्त्वा पश्चात्तत्पराक्रमज्ञानपरितुष्टेन परमेश्वरेण वीरभद्र इति नाम दत्तमित्युक्तम् । यथा— 'महावीरोऽसि रे भद्र मम सर्वगणेष्विह । नाम्ना त्वं वीरभद्रेति भव लोकेषु विश्रुत ' इति । वराहपुराणे गौरीविवाहप्रकरणे तु, मर्यादौ महा-

ललाटादुत्पन्नप्रजापतीनामन्यतमं स्थाणुं रुद्रं, यं प्रजा असृष्ट्वा जले मग्नस्तपश्चरन्स्थित, स एव जला दुत्तीर्य गणान्सृष्ट्वा तैः समेतो दक्षाध्वरं ध्वंसयामासेत्युक्तम्। यथा—'रुद्रक्रोधोद्भवो यस्तु पूर्वं मग्नो महाजले । स स- हस्रार्कसंकाशो निश्चक्राम जलात्तदा' इति तस्य निष्क्रमण मुक्त्वा, 'शुश्राव च तथा शब्दान्नृत्विजां दक्षसद्मनि । शुश्राव याजिना चोच्चैरिन्द्रागच्छति कीर्तनम् ॥ तत श्रुत्वा महातेजा सर्वज्ञ परमेश्वर । चुकोप सुभृशं देवो वाक्य चेदमुवाच ह' इत्यादिना तस्य दक्षाध्वरश्रवणजन्य कोपमु- पन्यस्य, तदुपरि 'तस्य नानदतो ज्वाला गात्रेभ्यो निर्ययु- स्तदा । ततो भूतानि वेताल उच्छुष्मा प्रेतपूतना ॥ कू- ष्माण्डा यातुधानाश्च सर्वे प्रज्वलिताननाः । उत्तस्थु को टिशस्तत्र नानाप्रहरणायुता' इत्यादिना गणानां सृष्टिमु- क्त्वा, 'एवं कृत्वा स सामर्षी देवदेव प्रतापवान् । जगाम दक्षयज्ञाय क्रोधाद्रुद्र प्रतापवान्' इत्यादिना समस्तेनाध्या- येन दक्षाध्वरध्वंसवृत्तान्तकथनपूर्वकं पश्चाद्दक्षवचनेन क्षमा- पणार्थं दक्षवितीर्णगौरीविवाहो वर्णित । पाद्मे तु शिव राघवसंवादे वीरभद्रेण कस्यचिदष्टशिरसो राक्षसस्य वध- मुक्त्वा तदनन्तरं नारदमुखाद्वृत्तान्तं श्रुत्वा स्तुवता मह-

विष्णुरुद्राणां वचने तस्य राक्षसस्योत्पत्तिवरलाभादिप्रतिपादनावसरे— 'त्वज्जटोत्पाटनेनैकः पुरुषः संभविष्यति । तेनैव मरणं नान्यैरिदमेव व्रतं शिव ॥ श्रीशिवः— भविष्यत्येवमेवैतदित्युक्त्वान्तरधीयत । एवं लब्धवरः पापी राक्षसो निहतस्त्वया ॥ अथालिङ्गच हरिर्वीरं शंकरश्च पितामहः । यथागतं तथा जग्मुश्च देवादियोषितः ॥ निपत्य दण्डवद्भूमौ वीरभद्रमथाब्रुवन्' इति प्रतिपादितम् । तथा च राक्षसवधादिकार्यसाधनायेयमपरा शिवजटाशकलाद्वीरभद्रस्योत्पत्तिः । एवं च यदत्र वीरभद्राद्गणानां सृष्ट्युपाख्यानं तदुत्तरेण नाम्नाविष्कृतं गणनाथ इति । यत्तूक्तं प्रजापतिपदे स्थितः स्थाणू रुद्र एव दक्षाध्वरध्वंसक इति, तत्तोऽप्युत्तरेण नाम्नाविष्कृतं प्रजापतिरिति । यत्तु पुनः सकलदेवतानिग्रहात्मकं कर्म तत्सर्वमत्रत्येन वीरपदेनैव सूचितम् , तथैव पौराणिकव्युत्पत्तेरपि दर्शितत्वात् । अथवा दक्षाध्वरध्वंसवृत्तान्तस्य दक्षाध्वरहर इति नाम्ना अग्रे वक्ष्यमाणतयात्र सामान्यतः शरभभैरववीरभद्रादिसाधारणं पराक्रमातिशयमात्रं विवक्षितम् । वीराणां भद्रः वीरभद्रः वीरश्रेष्ठ इत्यर्थः । ननु नैवं समासः संभवति, 'न निर्धारणे' इति निषेधादिति चेत्, नः

'द्विवचनविभज्योपपदे तरबीयसुनौ' इति सूत्रे, यतो निर्धार्यते, यश्चैकदेशो निर्धार्यते, येन हेतुना निर्धार्यते, एतत्रितयसंनिधाने हि निर्धारणं भवति; न तु तदभावेऽपि नागानामुत्तमो नागोत्तम इत्यादौ। तत्र हि संबन्धसामान्ये षष्ठी, तस्याश्च समासो भवतीति कैयटेनोक्तत्वात् तद्वदिहापि संबन्धसामान्यषष्ठ्या समासोपपत्तेः। ननु कथमिह त्रितयसंनिधानाभावः? प्रकरणादुपस्थितस्य शिवस्यैव विशेष्यतया मनुष्याणां क्षत्रियः शूर इतिवद्वीराणां शिवो भद्र इति तत्रयसंनिधानेन निर्धारणसंभवे सबन्धसामान्यषष्ठ्ययोगात्, न च संभवत्यपि निर्धारणे सबन्धसामान्यविवक्षया प्रकृतषष्ठीनिर्वाह इति वाच्यम्; तथा सति मनुष्याणां क्षत्रियः शूर इत्यादावपि संबन्धसामान्यविवक्षायाः संभवेन 'नागोत्तम इत्यादौ सबन्धसामान्यषष्ठी, मनुष्याणां क्षत्रिय इत्यादौ निर्धारणषष्ठी' इति कैयटोक्तविषयव्यवस्थाभङ्गप्रसङ्गेन त्रितयसंनिधाने सति निर्धारणप्रतीत्यवश्यंभावेन निर्धारणषष्ठ्या एवावश्यवक्तव्यत्वात्। नापि प्रकरणाद्वा साक्षाद्वा शिव इति विशेष्योपस्थितावपि शिवत्वस्य जातिगुणक्रियाबहिर्भूततया जातिगुणक्रियाभिः पृथक्करणस्यैव निर्धारणत्वेन तदभावात्संबन्धसामान्यषष्ठी संभवतीति वाच्यम्; जातिगुणक्रियाभिः

पृथक्करणं निर्धारणमिति वृत्तिकारीयव्याख्यानस्य त्रयी शब्दानां प्रवृत्तिरिति पक्षाभिप्रायकतया शिवत्वादेरपि जातिकोटौ निवेशात् चतुष्टयीपक्षेऽप्युपलक्षणतया शिवत्वादेरपि संग्रहात्; इतरथा अमीषां छात्राणां कतमो देवदत्तः पठतां देवदत्तः पटुतरः आदित्यानामहं विष्णुः नक्षत्राणामहं शशी इत्यादिषु निर्धारणषष्ठ्या अगतेः, तस्मात्कथमत्र समास इति चेन्, उच्यते । इदं तावदत्र विचारणीयम्— मनुष्याणां क्षत्रियः शूर इत्यादौ कथं शाब्दबोध इति; तत्र मनुष्याणां मध्ये यः क्षत्रियः स शूर इति भवितव्यम्, अत एव हरदत्तेन 'न निर्धारणे' इति सूत्रे अभिहितम्— 'क्षत्रियशब्देनात्र समासप्रसङ्गः, तदपेक्षा हि षष्ठी न शूरतमापेक्षा गुणत्वाच्च तेन न समासः' इति । प्रौढमनोरमायामपि नृणां द्विज इति प्रतीकमादाय द्विजशब्देनात्र समासप्रसङ्गः, तदपेक्षा हि षष्ठी न श्रेष्ठापेक्षेत्येतावद्धरदत्तोक्तमनूद्य न श्रेष्ठापेक्षेत्यत्रोपपत्तिरपि दर्शिता; श्रेष्ठत्वं च द्विजेतरमनुष्येभ्यः, तांश्च सामान्यशब्दोपस्थितान्विहाय अनुपस्थितकल्पनाया अन्याय्यत्वादिति । अस्यार्थः— द्विजनिष्ठं हि श्रेष्ठत्वं द्विजेतरमनुष्यनिरूपितम्; यद्यपि द्विजेतरेऽपि मनुष्याः मनुष्यत्वेनोपस्था-

प्यन्ते, तथाप्यन्वयितावच्छेदकरूपेणोपस्थितिर्मनुष्यशब्देन न भवतीत्यध्याहारेणैव तदुपस्थितिः. सपादनीयेति मनुष्याणामिति पदं द्विजपदेनैव समर्थमिति श्रेष्ठपदेनासामर्थ्यादेव समासाप्रसक्तेः द्विजपदेन प्रसक्त. स प्रतिषिध्यत इति, तस्मादेवं भवितव्यमिति। नैतदस्ति— मनुष्याणां मध्ये यः क्षत्रियः इति कोऽर्थः ? मनुष्यरूपसमुदायान्तर्गतो यः क्षत्रिय इति तावन्न संभवति, पृथक्करणलक्षणनिर्धारणस्येदानीमभावात्। किं चैवं सति समुदायसमुदायिभावलक्षणे संबन्धे वनस्य वृक्ष इतिवत् षष्ठ्याः समुदायिनं प्रति समुदायस्याधारतया वने वृक्षाः सहस्रे शतमितिवत् सप्तम्या अपि सिद्धतया 'यतश्च निर्धारणम्' इति सूत्रानर्थक्यप्रसङ्गात्। नापि मनुष्याणां क्षत्रियः मनुष्येभ्यः पृथग्भूतः क्षत्रिय इति; क्षत्रियाणामपि मनुष्यत्वेन तत्. पार्थक्यासिद्धेः। क्षत्रियत्वस्य मनुष्यत्वव्याप्यत्वात्पार्थक्यमस्तीति चेत्; तस्य सिद्धतया अबोधनीयत्वात्। एवं तर्हि भवितुमर्हति— यः क्षत्रियः स मनुष्याणां शूर इति। अत एव 'न निर्धारणे' इति सूत्रे प्रागुदाहृतवाक्यादुत्तरत एव गवां कृष्णा संपन्नक्षीरतमेति द्वितीयोदाहरणव्याख्यानावसरे हरदत्तेनोक्तम्— नैवमभिसंबन्धो गवां मध्ये या कृष्णा सा संपन्नक्षीरतमेति; एवं सति कृष्णाशब्दस्य गुण-

वचनत्वात् 'पूरणगुण' इत्येव समासनिषेधसिद्धेः । किंतु या कृष्णा सा गवां संपन्नक्षीरतमा— इति । न च कृष्णातिरिक्तग-व्यपेक्षसंपन्नक्षीरतमत्वस्य विवक्षिततया अन्वयितावच्छेदक-कृष्णेतरगवित्वप्रकारकबोधजननासमर्थत्वात्सामान्यशब्दस्य-गोपदस्य तत्रान्वेतुमर्हति इति प्रागुक्ताधुनिकसमर्थनविरोध इति वाच्यम्; 'चन्द्रे कलङ्कः सुजने दरिद्रता विकासल-क्ष्मीः कमलेषु चञ्चला। यशो विधातुः कथयन्ति खण्डितम्' इत्यादाविव अन्वयितावच्छेदकरूपेणानुपस्थितस्याप्यन्वयद-र्शनादिति। इदमपि न युक्तम्— अधुना हि क्षत्रियः स्वातिरि-क्तमनुष्यापेक्षया शूर इति फलितम्; एवं तर्हि निर्धा-रणकथैव लुप्ता, ननु कथं लुप्ता? निर्धारणं हि पृथक्करणम्, तच्च तदतिशायिगुणशालित्वरूपतद्वैलक्षण्यलक्षणं मनुष्यापे-क्षया क्षत्रियाणामव्याहतमिति कृत्वेति चेत्, न; न हीदृशं पृथक्करणं वैयाकरणा मन्यन्ते, निर्धार्यधर्मितावच्छेदके यज्जा-त्यादि तत्कृतमेव पृथक्करणं निर्धारणमिति तेषामभिमानात्। अत एव काशिकायां वृत्तौ 'जातिगुणक्रियाभिः पृथक्करणं निर्धारणं तत्र षष्ठी न समस्यते । यथा मनुष्याणां क्षत्रियः शूरतमः, गवां कृष्णा सपन्नक्षीरतमा, गच्छतां धावन्शी-घ्रतम' इत्युदाहृतम् । एवं तर्हि एवं भवतु— मनुष्याणां

क्षत्रिय शूरतम इति मनुष्याणां मध्ये क्षत्रिय शूरतम न सर्वे मनुष्या इति । एवं हि पृथक्करणं समभिव्याहृतैकधर्मान्वयरूपं निर्धारणशब्दवाच्यमपि समर्थितं भवति । न चात्र जातिगुणक्रियाभिः पृथक्करणं निर्धारणमिति वैयाकरणाभिमतं पृथक्करणमिदं नेति वाच्यम्, अस्मिन्पृथक्करणे जातिगुणक्रियाणामप्यनुप्रवेशात् । तथा हि– क्षत्रिया एव शूरा न सर्वे मनुष्या इत्यत्र प्रागुक्तैकधर्मान्वयव्यवच्छेदकभेदपर्यवसन्नतया निर्धार्यधर्मितावच्छेदकभूतानां जात्यादीनां शूरत्वं न मनुष्येषु कात्स्न्र्येन, किं तु क्षत्रियरूपतदेकदेशावच्छेदेनेति समभिव्याहृतधर्मान्वयसंकोचकतयानुप्रवेश स्पष्ट इति । तथा च तद्व्यापकत्वे सति तद्व्याप्यव्यापकत्वं षष्ठ्यर्थः, मनुष्यत्वाव्यापकं तद्व्याप्यक्षत्रियत्वव्यापकं च यच्छूरत्वं तद्वान्क्षत्रिय इत्यर्थः । अस्मिञ्छाब्दबोधे षष्ठ्या स्वार्थघटकतया क्षत्रियेण स्वप्रतियोगिसमर्पकतया शूरेण च साकाङ्क्षतयोभयसापेक्षस्य षष्ठ्यन्तस्य केनापि साकं सामर्थ्याभावात् सिद्ध एव समासाभावः 'न निर्धारणे' इति सूत्रेणानूद्यते । यत्र तु नैवंरूपः षष्ठ्यर्थः । किं तु निरूपकत्वमात्रपरः नागानामुत्तमो नागोत्तम इत्यादौ, तत्र षष्ठ्या एकमात्रसापेक्षतया उत्तमपदेन साकं सामर्थ्यादप्रतिबद्धः समा-

मः । इदमेवाभिमतं त्रितयसंनिधाने समासनिषेधवादिनः कैयटस्यापि, अस्मदुक्तनिर्धारणस्य त्रितयसंनिधानसापेक्षतया तत्र चासामर्थ्येन समासाभावस्य सिद्धत्वादिति । अत एव नागोत्तम इत्यादौ निरूपकत्वमात्रस्य षष्ठ्यर्थत्वेन षष्ठीनिर्वाहाय त्रितयापेक्षा नास्तीति तादृशस्थले समासोऽप्रतिबद्ध इत्यप्युक्तम् । अत एवोक्तं भगवत्पादैरपि सहस्रनामभाष्ये पुरुषोत्तमनामव्याख्यानावसरे 'पुरुषाणामुत्तमः पुरुषोत्तमः 'न निर्धारणे' इति समासनिषेधो न भवति, इह जात्याद्यनपेक्षया समर्थत्वात् । यत्र तु जात्याद्यपेक्षया पृथग्भावस्तत्रासमर्थत्वान्निषेधः प्रवर्तते मनुष्याणां क्षत्रियः शूरः, गवां कृष्णा संपन्नक्षीरतमा, गच्छतां धावन्तः शीघ्रतम इत्यादौ' इति । अथवा वीरेषु भद्र इति सप्तम्यन्तपूर्वपदः 'संज्ञायाम्' इति समासः । एतेन च द्वादशी महेश्वरमूर्तिरनुसंहिता । यथोक्तं वातूलशुद्धे— 'एकादशं गजारिः स्याद्द्वादशं वीरभद्रकम्' इति । महेश्वरव्यूहान्तर्गतत्वादेव त्रिमूर्त्यात्मकत्वेन वीरभद्रः शिवपुराणे वर्णितः । यथा— 'आ नाभेर्ब्रह्मणो रूपमा कण्ठाद्वैष्णवं वपुः । आ ललाटान्महादेवं त्रिरूपं तु त्रयीमयम्' इति । यत्तु व्याख्यातं वराहपुराणोक्तरीत्या 'रुद्रकोपोद्भवो यस्तु पूर्वं

मग्नो महाजले । स सहस्रार्कसंकाशो निश्चक्राम जलात्तदा' इति ब्रह्मकोपोत्पन्नस्थाणुरुद्रः प्रजापतिपदस्थित एव वीरभद्र इति; तस्मिन्पक्षे संहाररुद्रव्यूहान्तर्भावः, ब्रह्मकोपोत्पन्नत्व-लिङ्गादिति ध्येयम् ॥ ५५ ॥

गणनाथ इति । गणानां नाथो गणनाथः, वीरभद्रा-वतारे गणानां सृष्टेः प्रागुक्तत्वात् । यद्वा गणा नन्दिभृङ्गि-महाकालप्रभृतयः, तेषां नाथ इत्यर्थः ॥ ५६ ॥

प्रजापतिरिति । स्थाणुरुद्रस्य प्रजापतिष्वन्तर्भावादिति प्रागेवोक्तम्, तस्य च प्रजापतित्वम् 'सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्' इति श्रुतिप्रसिद्धासंख्यातरुद्र-सर्गस्य तदधीनत्वात् ॥ ५७ ॥

**हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।**
**भुजंगभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥**

हिरण्यरेता इति । हिरण्यं हिरण्यात्मकं रेतो यस्य स तथोक्तः; रुद्रेण सर्गादावपः सृष्ट्वा, तासूत्सृष्टस्य वीर्यस्य हिरण्यरूपब्रह्माण्डात्मना परिणतत्वात् । यथोक्तं स्कान्दे सौरसंहितायाम्— 'त्रिमूर्तीनां तु सर्गस्यानन्तरं परमः शिवः । शब्दादीनां तु भूतानामुत्पत्तिं कुरुते स्वयम्' इत्या-

दिना त्रिमूर्त्यादिसर्गमुक्त्वा, 'सदाशिवेश्वरौ रुद्रस्तथा नारायणो विधिः । इति नाम्ना प्रकीर्त्यन्ते तेषु रुद्रः शिवाज्ञया ॥ पुरस्तादण्डसर्गस्य ससर्जापो द्विधा पुनः । अपामेकांशके विद्धन्स्वकं वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन्जज्ञे स्वयं विष्णुर्ब्रह्मांशेन समन्वितः ॥ आपो नारा इति प्रोक्ताः सूक्ष्मास्ता मुनिसत्तम । शिवस्य नरसंज्ञस्य यतः कार्याणि तास्वतः ॥ ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः । अंशोपाधिवशेनैव ब्रह्मेति परिकीर्तितः ॥ अपामन्तरवस्थानान्नारायण इतीरितः' इति । यद्वा हिरण्यजनकत्वाद्धिरण्यम्, तद्रेतो यस्येति बहुव्रीहिः प्रागेवेव । हिरण्यजनकत्वं तु कुमारोत्पत्तौ भगवद्वीर्यसंस्पर्शमात्रेण तत्रत्यानां सौवर्णत्वस्य रामायणे दर्शितत्वादिति भेदः । यथोक्तं बालकाण्डे— 'निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् । सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम्' इति ॥ ५८ ॥

दुर्धर्ष इति । दुःखेन धर्षणीयः, केनापि धर्षयितुमशक्य इति भावः । सर्वथा अलभ्ये दुर्लभ इति प्रयोगात् । धृषेः प्रागल्भ्यार्थकस्य लक्षणया तत्पूर्वकाभिभववृत्तेः कर्मणि 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्यये रूपम् ।

अस्मिन्नर्थे 'न तत्समश्चाभ्यधिकश्च विद्यते' इति श्रुति र्मानम् ॥ ५९ ॥

गिरीश इति । गिरेः कैलासस्य ईशः गिरीशः, यद्वा गिरीणां कैलासमेरुमन्दरादीनामीशो गिरीशः । पर्वताधिपत्यं च शिवस्य हरिवंशे धन्याश्चर्योपाख्याने नारदं प्रति पर्वतानां वचने दर्शितम्— 'ब्रह्मर्षे न वयं धन्या नाप्याश्चर्याणि सन्ति नः । अस्माकमीश्वरः शूली गिरिशो वृषभध्वजः ॥ नाश्चर्यो वापि धन्यो वा तस्मात्परतरो भुवि' इति ॥ ६० ॥

गिरिश इति । गिरौ कैलासे शेत इति गिरिशः 'गिरौ डश्छन्दसि' इति डप्रत्ययः, छान्दसा अपि कचिद्भाषाया प्रयुज्यन्ते इति टीकासर्वस्वे । यद्वा गिरिं मेरुं श्यति तनूकरोति लघूकरोति चापत्वेन धारणादिति गिरिशः, 'आतोऽनुपसर्गे कः' इति कः । अत्र प्रथमव्याख्याने गिरौ शयनं न हि लोकसिद्धं विवक्षितं किं तु शीधातुना सुखावस्थानं विवक्षितमिति 'त्रयोविंशं सुखासनम्' इति वातूलशुद्धप्रसिद्धा महेश्वरमूर्तिरनुसंहिता । इदं च श्रुतिसिद्धं नाम, 'नमो गिरिशाय च शिपिविष्टाय च' इति ॥ ६१ ॥

अनघ इति । न विद्यतेऽघं पापं दुःखं वा यस्य स

तथा । 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' इति श्रुतेः ॥ ६२ ॥

भुजंगभूषण इति । 'भुजकौटिल्ये' भुजं कुटिलं यथा तथा गच्छन्तीति भुजंगाः सर्पाः, 'खच्च डिद्वा वक्तव्यः' इति खच्; त एव भूषणं यस्य स तथा । भुजंगाश्चात्र दारुकावनस्थमुनिकृताभिचारोत्पन्नः गरुडभीत्या शरणागता वासुकिप्रभृतयश्च गृह्यन्ते । यथोक्तं स्कान्दे— 'ततः पञ्चफणा नागा निःश्वसन्तो विषोल्बणाः । शीघ्रमुत्थाय कुण्डेभ्यः समाजग्मुर्महेश्वरम् ॥ तानुपादाय नागेन्द्रान्ज्वलितानुपशोभितान् । दधाराभरणत्वेन तेनासीन्नागभूषणः ॥ अपरैरपि नागेन्द्रैर्वासुकिप्रमुखैः शिवः । वैनतेयभयात्प्राप्तैरलंचक्रे निजां तनुम्' इति । एतेन ये लोकानामुद्वेजकास्त एवास्य भूषणानीत्युक्त्या सर्वाभिभावकत्वमुक्तम् ॥ ६३ ॥

भर्ग इति । भर्ज्यन्ते पच्यन्ते दह्यन्ते पापान्यनेनेति भर्गः । भृज्जतेः पाकार्थात्करणे घञ् 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रमागमे 'चजोः कुघिण्यतोः' इति कुत्वे च रूपम् । सर्वपापनिवर्तकत्वं च शिवस्य शिवधर्मोत्तरादिषु प्रसिद्धम्; 'छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् । यजेदेकं विरूपाक्षं न स पापेन लिप्यते'

इति । इद च श्रुतिप्रसिद्ध नाम— 'भर्गो देवस्य धीमहि' इति । ननु नात्र भर्गशब्दोऽकारान्त प्रयुक्त , किं तु सकारान्तस्तेजोवाची, सवितुर्देवस्य वरण्य तद्भर्ग तेज धीमहि ध्यायेम य सविता न अस्माक धिय प्रचोदयादिति तदर्थात् । अत एव 'या देव सवितास्माक धियो धर्मादि गोचरा । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे' इति स्मृतिका रैरन्वयक्रमोऽपि दर्शित इति चत्, न, एव सति 'धियो यो न प्रचोदयात्' इति यच्छब्दे पुलिङ्गानुपपत्त । तथाहि— सवितुर्वरण्य तद्भर्गो धीमहि धिया यो न प्रचोदयात्— इति कोऽथ ? यच्छब्देन किं सविता परामृश्यते, किं वा भर्ग , आद्य सवितृपद किं सूर्यपरम्, उत ब्रह्मपरम्, न तावदाद्ये आद्य , सवितृमण्डलवर्तिनो ब्रह्मण अन्तर्यामि त्वेन सवितुर्धीप्रचादकत्वाभावात्, तस्य भर्गोविशेषणस्य य च्छब्दपरामर्शनीयत्वकल्पने सवनाम्ना प्रकृतप्रधानपरामर्शक त्वव्युत्पत्तिभङ्गाच । नाप्याद्ये द्वितीय , तस्य धीप्रचोदकत्वेऽपि प्रागुक्तव्युत्पत्तिभङ्गदोषस्यानिस्तारात्, किंच सवितृपदस्यैव ब्रह्मपरत्वे वरेण्य भर्ग इत्यस्यानन्वयापत्ते , ब्रह्मणोऽपि वरेण्य स्य तेजसोऽभावात्। वरेण्य लोकश्रेष्ठ सवितुर्भर्ग इति 'राहा शिर' इतिवदभेदेऽपि भेदव्यपदेशादन्वयोपपत्तिरिति चेत्,

न, गायत्र्यर्थानुबन्धिषु 'तैत्तिरीयमैत्रायणीयश्वेताश्वतरीय-वाक्येषु 'तां सवितुर्वरेण्यस्य' 'तत्सवितुर्वरेण्यम्' 'तदक्षरं तत्सवितुर्वरेण्यम्' इत्येतेषु सवितृवरेण्यपदयोरन्वयस्य दर्शितत्वेन इहापि तथैव वक्तव्यत्वात् । नापि द्वितीयः, यच्छब्दस्य पुलिङ्गत्वानुपपत्तेः; तस्मादकारान्त एव भर्गशब्दः । एवं सति यच्छब्दे पुंलिङ्गतोपपद्यते । सवितुः सूर्यस्य वरेण्यं तस्यापि तेजोधायकम् 'येन सूर्यस्तपति' इति श्रुतेः; तत् धीमहि ब्रह्म धीमहि 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतावचनात् । यद्वा तदिति सामान्ये नपुंसकम्, 'शक्यं क्षुदुपहन्तुम्' इत्यादिवत् । यो भर्गो धियः प्रचोदयात् इति 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमाधिप्त' इति वैयाकरणोक्तरीत्या 'शैलं हि यस्या प्रकृतिर्जलस्य' इतिवत् प्रतिनिर्दिश्यमानभर्गापेक्षया पुंलिङ्गत्वोपपत्तेः । अधुना तु किंचिद्व्यवहितान्वयः कर्तव्यः; वरं हि व्युत्पत्तिभङ्गाद्व्यवहितान्वयः । किंच मैत्रायणीयशाखायाम् 'एष रुद्रो भर्गात्मकः' इति गायत्र्यर्थनिरूपणावसरे अकारान्तपक्षस्यैवोद्घाटितत्वात् । योगयाज्ञवल्क्ये च 'देवस्य सवितुर्मध्ये यो भर्गो नो धियः क्रमात् । प्रचोदयात्तं वरेण्यं धीमहीत्यन्वयक्रमः' इत्यकारान्तपक्षस्यैवो-

ञाविवत्वात्। अत एवोक्तमादित्यपुराणेऽपि— 'गायत्र्या: परमं तत्त्वं देवदेवो महेश्वर: । इति ध्यात्वा जपन्विद्वान्गायत्र्याः फलमश्नुते ' इति। कौर्मेऽपि राजवंशानुकीर्तने वसुमनसो राज्ञो गायत्र्या सूर्यमण्डलस्थं शिवमुपासीनस्य सूर्यमण्डलान्निर्गतेन शिवेन प्रसाद कृत इत्युपवर्णितम्। यथा— 'राजा वसुमनास्तत्र रविमण्डलमध्यगम् । समुपासिष्ट गायत्र्या पुरुष रुक्मविग्रहम् ॥ अनुग्रहार्थं तस्याथ भगवान्परम. शिव: । आविर्भूय रवेर्बिम्बादस्मै रूपमदर्शयत् ॥ शिवशक्तिमयं दिव्यं चन्द्रार्धकृतशेखरम् । त्रिलोचन नीलकण्ठं ब्रह्मेन्द्रोपेन्द्रवन्दितम् ॥ अनुगृह्य च त काल देहान्तेऽदाशिजं पदम् । तुष्टश्चिरतर तस्य गायत्र्याराधनादिभि ' इति । यत्तु प्रागुदाहृतम्— 'यो देव' सवितास्माकम्—' इत्यादि, तत्पर्यवसितार्थाभिप्रायम् । सर्वथापि हि सकलधीप्रचोदकपरब्रह्माधिष्ठितमादित्यात्मकं तेज उपास्यमिति । अत एव माधवीयस्मृतिरत्ने 'यो देव. सविता' इत्युदाहृतश्लोकस्यास्मदुक्तरीत्यैवार्थो दर्शित । यथा— 'तदित्येतत्पर ब्रह्म ध्येयं तत्सूर्यमण्डले' इति, 'भर्ग. स्वमाक्षात्कारेणाविद्यातत्कार्यदाहक: ' इति, 'य इत्यरूपमव्यक्तं सत्यानन्दादिलक्षणम्' इति च । भृज्जति पचति दहति स्वसाक्षात्कारेण

अविद्या तत्कार्यभूतं संसार चेति भर्गः इति व्युत्पत्त्या भर्ग इत्यकारान्ततायाः स्पष्टमभिधानात् । प्रथमं तच्छब्दस्य ब्रह्मपरत्वोद्भावनात् य इत्यत्र यत्पदं प्रथमोपात्तसत्यानन्दादिलक्षणतत्पदार्थपरब्रह्मपरामर्शीत्यनेन 'यो देव सवितास्माकम्' इति श्लोकदर्शितान्वयरीत्या सवितृपरामर्शकमिति न भ्रमितव्यमित्युपदर्शितत्वाच्च । तस्मात् पर्यवसितार्थपर एवाय श्लोक इति । विस्तरस्तु अस्मद्दीक्षितप्रणीते शिवतत्त्वविवेके द्रष्टव्य. ॥ ६४ ॥

गिरिधन्वेति । गिरि. मेरु धनुर्यस्येति वा धन्व यस्येति वा गिरिधन्वा । प्रथमव्याख्याने 'धनुषोऽनङ्' इत्यनङ् समासान्त. । इदं च अर्थत श्रुतिप्रसिद्धं नाम; 'रुद्राय स्थिरधन्वने गिर.' इति च्छन्दोगानाम्, देवव्रते च 'नमः स्थिराय स्थिरधन्वने' इति ॥ ६५ ॥

गिरिप्रिय इति । गिरय. कैलासमेरुमन्दरादय. प्रिया यस्य आवासत्वेनेति वा, धन्याश्चर्योपाख्यानोक्तरीत्या सर्वे न वा 'सर्वे शिलोच्चयाः पुण्या सर्वा नद्यश्च भारत' इति भारतोक्तरीत्या पुण्यदेशत्वेनेति वा गिरिप्रियः ॥ ६६ ॥

कृत्तिवासाः पुरारातिर्भगवान्प्रमथाधिपः ।
मृत्युंजयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥

कृत्तिवासा इति । कृत्तिः दारुकावनस्थमुनिकृताभिचारोत्पन्नव्याघ्रस्य चर्म वासः वस्त्रं यस्य स तथा । यथोक्तं स्कान्दे— 'ततो व्याघ्रो महान्क्रुद्ध आजगाम नखायुधः । तेषामृषीणां मर्मस्थः कोपोऽयं निर्गतो यथा ॥ तं चादाय त्वचं भित्त्वा तदा चर्माम्बरोऽभवत् । शुशुभे चर्मणा तेन नानावर्णयुतेन च' इति । अथवा काश्यां शिवभक्तजिघांसयागतस्य गजासुरस्य कृत्तिरत्र विवक्षिता । यथोक्तं स्कान्द एव— 'वाराणस्यां पुरायातो गजरूपो महासुरः । तापसांश्शिवभक्तांश्च निहन्तुं कोपदीपितः' इत्युपक्रम्य 'हत्वा तं कुञ्जरं भीममधृष्यं दिग्गजैरपि । पादहस्तयुतं चर्म विशम्याच्छिद्य तेन वै । प्रावृत्यात्मानमात्मेशः स्तूयमानोऽखिलैः सुरैः' इति । अत्र द्वितीयव्याख्याने एकादशी महेश्वरमूर्तिरनुसंहिता, 'एकादश गजारिः स्यात्' इति वातुलशुद्धवचनात् । इदं च श्रुतिप्रसिद्धं नाम; 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति ॥ ६७ ॥

पुरारातिरिति । पुराणां शरीराणां स्थूलसूक्ष्मकारणात्मनाम् अरातिः शत्रुरिति पुरारातिः । तदरातित्वं च शिवस्य स्वज्ञानस्य विदेहकैवल्यहेतुत्वात्; तच्च मन्त्रोपनिषदि प्रसिद्धम्— 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।

फलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्' इति ॥ ६८ ॥

भगवानिति । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति विष्णुपुराणवचनात् ऐश्वर्यादिगुणषट्क भगः तद्वान् भगवान् । तत्र समग्रमैश्वर्यं नाम सर्वविषयकमैश्वर्यम् । तच्च 'ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इति 'भूयः सृष्ट्वा पतयस्त्वथेशः सर्वाधिपत्यं कुरुते महात्मा । तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रुतिसिद्धं वीर्यं पराक्रमः शरभभैरववीरभद्राद्यवतारप्रसिद्धः; स च 'न वा ओजीयो रुद्र त्वदस्ति' इति 'क्षयद्वीराय प्रभरामहे मतिम्' इत्यादिश्रुतिसिद्धः । यशः सकलजनस्तुत्यत्वम्; तच्च 'नमः श्लोक्याय चावसान्याय च' 'विदाम देवं भुवनेशमीड्यम्' 'तस्य नाम महद्यशः' इत्यादिश्रुतिभिः 'यं विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् । तमर्चयन्ति ये श्रद्धदुर्गाण्यतितरन्ति ते' इत्यादिभारतवचनैश्च प्रसिद्धम् । श्रीः अम्बिकैव, 'श्रियं लक्ष्मीमौपलामम्बिकां गाम्' इति श्रुतेः; तद्वत्त्वं च 'उमासहायं परमेश्वरं प्रभुम्' इत्यादिश्रुतिसिद्धम् । ज्ञानं सर्वविषयकम्; तच्च 'यः सर्वज्ञः सर्ववित्' 'स विश्वकृद्विश्व-

विद्यात्मयोनिः' इत्यादिश्रुतिसिद्धम् । वैराग्यं सर्वत्र निःस्पृहता; तच्च सर्वत्रौदासीन्यप्रतिपादिकाभिः 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतिभिः, 'ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे' इति स्मृतिभिश्च सिद्धम् ॥ ६९ ॥

प्रमथाधिप इति । प्रमथ्नन्ति अवैदिकानिति प्रमथाः पार्षदाः, तेषामधिपः प्रमथाधिपः । प्रमथानां च तथात्वं सौप्तिके दर्शितम्; यथा तान्प्रकृत्य 'मनोवाक्कर्मभिर्भक्तान्पान्ति पुत्रानिवौरसान् । पिबन्त्यसृग्वसांश्चान्ये क्रुद्धा ब्रह्मद्विषां सदा' इति ॥ ७० ॥

मृत्युंजय इति । मृत्युः मरणं स्वभक्तानां मृत्युं जयति स्वोपासनया परिहरतीति मृत्युंजयः । 'संज्ञायां भृतृवृजिधारिसहितपिदमः' इति खच् । 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्' इति मन्त्रलिङ्गात्, 'यस्मिन्युक्ता ऋषयो देवताश्च, तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति' इति श्रुतेश्च ॥ ७१ ॥

सूक्ष्मतनुरिति । सूक्ष्मा दुर्ग्रहा तनुर्यस्य स तथा, 'सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये घृतात्परं मण्डमिवाति-

सूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम्' इत्यादिश्रुतेः । यद्वा सूक्ष्मादपि तनुः अतिसूक्ष्म इत्यर्थः, 'अणोरणीयान्' इति श्रुतेः ॥ ७२ ॥

जगद्व्यापीति । व्याप्तुं शीलमस्यास्तीति व्यापी । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । यद्यपि काशिकायां वृत्तौ 'अनुवर्तमाने सुब्ग्रहणमुपसर्गव्यावृत्त्यर्थम्' इत्युक्तया नात्र णिनिर्लभ्यः, तथापि तदेव वृत्तिकारवचनं भाष्यविरोधादुपेक्षणीयम् । उक्तं हि महाभाष्ये— 'अथ सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थमनुपसर्ग इत्येवं तदभूत्; इदं तु सुब्मात्रे यथा स्यात्' इति । उदाहृतं च 'उदासारिण्यः प्रत्यासारिण्यः' इति । अत एव 'न्यषेधि शेषोऽप्यनुयायिवर्गः' 'स बभूवोपजीविनाम्' 'भ्रमरैः कुसुमानुसारिभिः' 'पतत्यधो धाम विसारि सर्वतः' 'न वश्वनीयाः प्रभवोऽनुजीविभिः' इत्यादयो रघुवंशमाघभारविकाव्यप्रयोगा अप्युपपन्नाः । जगतो व्यापी जगद्व्यापी, 'सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः' इति श्रुतेः । इदं चार्थतः श्रुतिप्रसिद्धं नाम । अथर्वशिरसि वाच्यवाचकयोरभेददृष्ट्या प्रणवे 'यः प्रणवः स व्यापी सोऽनन्तः' इत्यादिना सर्वव्यापीति नाम प्रयुज्य अथ 'कस्मादुच्यते

सर्वव्यापी' इति प्रश्नपूर्वकं तन्निर्वचनात् ॥ ७३ ॥

जगद्गुरुरिति । जगतो गुरुः आद्यविद्योपदेष्टा जगद्गुरुः, जगत्पितामहस्य ब्रह्मणोऽपि प्रथमं वेदोपदेष्टृत्वात् । तथा च श्रुतिः — 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । योगपातञ्जलेऽप्युक्तम्— 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति । एतेन सकलजनज्ञानोपदेष्ट्री दक्षिणामूर्तिरूपा 'दक्षिणामूर्तिरूपं तु चतुर्विंशत्प्रकीर्तितम्' इति वातूलशुद्धवचनावगता महेश्वरस्य चतुर्विंशतितमी मूर्तिरनुसंहिता ॥ ७४ ॥

व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥

व्योमकेश इति । गङ्गाधारणसमये व्योमवद्विशालो जटावलयरूपः केशोऽस्येति व्योमकेशः । यद्वा व्योमैव केशो यस्य स व्योमकेशः, 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इति भगवद्गीतास्थाद्भ्य वचनेन 'नारायणोऽपि भगवान्देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम्' इति कूर्मपुराणवचनात् तत्रत्यश्वरगीता

भगवद्गीतयोरैकार्थ्यनिश्चयेन च शैवत्वेन निश्चिते अर्जुनाय कृष्णेन दर्शिते विश्वरूपे 'दिवं ते शिरसा व्याप्तम्' इति वचनेन दिवः शिरस्त्वेनावगमात्। यथा च भगवद्गीतोपवर्णितं विश्वरूपं शैवं तथा प्रपञ्चितमस्मदीक्षितैः शिवतत्त्वविवेकादिषु ॥ ७५ ॥

महासेनजनक इति । महती सेना यस्य स महासेनः स्कन्दः, देवसेनाधिपत्वात्, तस्य जनक इत्यर्थः । एतेन महासेनजनकस्य उमासाहित्यसापेक्षतया सोमास्कन्दाख्या 'विप्रप्रसाद विशद सोमास्कन्दमतः परम्' इति वातूलशुद्ध-वचनसिद्धा एकविंशतितमा महेश्वरमूर्तिरनुसंहिता ॥ ७६ ॥

चारुविक्रम इति । चारुः मनोहरः कटाक्षस्मितादिरूपतया विक्रमः कामदहनत्रिपुरशिक्षणादिरूपो यस्य स तथा । एतेन लीलारूपपराक्रमकीर्तनेन पादाङ्गुष्ठोद्धरणजनितस्य सुदर्शनस्य स्वतः समुद्धरणमात्रसिद्धस्य जलन्धरवधस्यापि क्रोडीकारात् 'जलंधरवधं दश' इति वातूलशुद्धवचनावगता महेश्वरस्य दशमी मूर्तिरनुसंहिता ॥ ७७ ॥

रुद्र इति । रोदयत्यन्तकाले सर्वमिति रुद्रः । 'रोदेर्णिलुक् च' इत्युणादिसूत्रेण रुदेर्ण्यन्तात्रक् णिलोपे च रूपम् । इयं च व्युत्पत्तिः छान्दोग्ये 'पुरुषो वाव यज्ञस्तस्य

यानि चतुर्विंशतिवर्षाणि' इति खण्डे प्राणषु रुद्रपद प्रयुज्य रुद्रपदप्रवृत्तिनिमित्ताभावात् कथ रुद्रपदवाच्यता प्राणानाम् इति शङ्कायां तत्समर्थयमानया श्रुत्या प्रदर्शिता– 'प्राणा वाव रुद्रा एते हीद सर्वं रोदयन्तीति । यत्तु रुद्रो वा एष यदग्नि' इत्युक्त्वा 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति व्युत्पादन श्रुतौ तत्प्रसिद्धाग्निविषय न शिव विषयमिति न्यायसुधायाम् । वस्तुतस्तु सा श्रुतिर्यथा तथा वास्तु । रादितीति रुद्र इत्यण्यन्तादपि रुदे 'प्रत्ययत प्रकृतेश्च तद्ग्राह्यम्' इत्यौणादिकरक्प्रत्ययेन रुद्रपद साधयितु शक्यम् । ब्रह्मण प्रीत्यर्थं तस्य ललाटादाविर्भूतस्य परमे श्वरस्य शैशवाभिनयार्थं रोदनस्य भारते शान्तिपर्वणि दर्शितत्वात् । यथा— 'ततस्ता विपुला नीतिं पूर्वं जगाद शकर । बहुरूपो विशालाक्ष शिव स्थाणुरुमापति ॥ अनादिनिधनो देवश्चैतन्यादिसमन्वित । ज्ञानानि च वशे यस्य तारकादीन्यशेषत ॥ अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । तुष्ट्यर्थं ब्रह्मण पुत्रो ललाटादुत्थित स्वयम् ॥ अरुदत्सुस्वर घोर जगत प्रभुरव्यय । पिता पुत्रे जायमान पुत्र पितरि चैव हि' इति । अथवा रुत् दु ख दु खहेतुरज्ञान वा तद्द्रावयतीति रुद्र । पृषोदरादित्वात्सा-

धुः । यथोक्तं वायवीयसंहितायाम्— 'रुद्.ख दुःखहेतुर्वा तद्द्रावयति यः प्रभुः । रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्' इति । हरिवंशे कैलासयात्रायामप्युक्तम् 'रुद्रो देवो रोदनाद्द्रावणाच्च' इति । यच्चानुशासनिके वचनम्— 'यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् । मांसशोणितमज्जादो यत्ततो रुद्र उच्यते' इति, तत् तावद्विधव्युत्पत्तिप्रदर्शनपरमिति न भ्रमितव्यम्, अनुशासनाभावात्; किं तु 'वह्निरन्तर्जगद्विश्वं प्राप्य तेजोमयी शुभा । रौद्री रुद्राभिधा मूर्तिरामिता घोररूपिणी' इति शिवपुराणवचनेन अग्न्यधिष्ठाऽय्या मूर्तेः रुद्रपदवाच्यतानिश्चयात्, तस्यां च रोदयितृत्वमेव प्रवृत्तिनिमित्तमुपवर्णयितुम्, तच्च क्लेशजनकत्वं विना न संभवतीति तादर्थ्येन तीक्ष्णत्वादिवह्निनिष्ठधर्मप्रदर्शनपरमिति बोद्धव्यम्, शरीरधर्मेण शरीरिणो व्यपदेशौचित्यात्; दाहकत्वादयो ह्यग्निधर्माः; मांसशोणितमज्जादत्वं च जाठराग्नेराहारदोषोभयाभावे वैद्यशास्त्रे प्रसिद्धम्; यथोक्तम्— 'आहारं पचति शिखी दोषानाहारवर्जितः पचति । दोषक्षये च धातून्पचति च धातुक्षये प्राणान' इति । मतान्तरे तु सूर्याधिष्ठाऽय्या मूर्ते रुद्र इति नाम; यथोक्तं लैङ्गे उपरिभागे—'सूर्यात्मा भगवान्देवः सर्वदेवविभूतिदः । रुद्र इत्युच्यते देवैर्भगवा-

न्मुक्तिभुक्तिदः' इति । अस्मिन्पक्षे रुजं द्रावयतीति व्युत्पत्तिः द्रष्टव्या, 'आरोग्यं भास्करात्' इति वचनेन आदित्यमूर्तेः रोगनिहारकत्वात् । इदं च बहुश्रुतिप्रसिद्धं नाम; 'नमस्ते रुद्र मन्यवे' 'रुद्र यत्ते दक्षिणं मुखम्' 'इमा रुद्राय' 'रुद्राय तीरसदे नमः' इति ॥ ७८ ॥

भूतपतिरिति । भूताः देवयोनिविशेषाः, तेषां पतिरित्यर्थः । प्रतिसायं लोकपीडार्थं प्रवर्तमानानां तेषां नटनप्रदर्शनेन पारवश्यं संपाद्य शिवेनैव नियमनं क्रियत इति भारते उमामहेश्वरसंवादे देवीकृतश्मशानवासनिमित्तप्रश्नोत्तरे सूचितम् । यथा— 'मदन्येन न शक्यं तन्निहन्तुं भूतजं भयम् । तन्नस्थोऽहं प्रजाः सर्वाः पालयामि दिने दिने ॥ मन्नियोगाद्भूतसंघा न च घ्नन्तीह कंचन । तांस्तु लोकहितार्थाय श्मशाने रमयाम्यहम्' इति । यद्यप्यत्र सामान्यतो 'रमयामि' इत्युक्तम्, तथापि सायं नर्तनेनैव तदिति सकलशिवपुराणप्रसिद्धम् । ततश्च 'तृतीयं च वृषारूढं चतुर्थं नृत्तरूपकम्' इति वातूलशुद्धप्रसिद्धा चतुर्थी महेश्वरमूर्तिरनुसंहिता ॥ ७९ ॥

स्थाणुरिति । त्रिपुरविजयसमये सज्जीकृतचापः सन् पुराणां योगं प्रतीक्ष्य निश्चलतया स्थित इति स्थाणुः ।

'स्थो णु' इत्युणादिसूत्रेण स्थाधातोर्णुर्भवतीत्यर्थकेन कर्तरि णु । तथा चोक्तं द्रोणपर्वणि—' अतिष्ठत्स्थाणुभूत सन्सहस्र परिवत्सरान् । यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै ॥ त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद स ' । यद्वा स्थाणु-वृक्ष , तत्साम्यात् स्थाणु । अत एवोदाहृतवचने 'स्थाणुभूत सन्' इत्युक्तम्, पितृभूत पुत्र इत्यादाविव भूतशब्दस्योपमार्थकत्वात् । अत एव श्रुतिरप्याह— 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेद पूर्णं पुरुषेण सर्वम्' इति । यद्वा महालिङ्ग-प्रादुर्भावसमये ज्योतिर्लिङ्गरूपेण तिष्ठति निश्चलतया वर्तत इति स्थाणु । अत एवागमेषु पठ्यते— 'नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने । चतुर्मूर्तिवपुश्छायाभा-सिताङ्गाय शम्भवे' इति । उक्तव्युत्पत्तित्रय च द्रोणपर्वणि दर्शितम्— 'दहत्यूर्ध्वं स्थितो यच्च स्थाणुवत्तस्थित च यत् । स्थिरलिङ्ग च यन्नित्य तस्मात्स्थाणुरिति स्मृत' इति । ऊर्ध्वं विद्यमान पुरत्रय स्थित सन् यद्दहतीत्याद्या व्युत्पत्ति । तत्स्थित तात्कालिकावस्थान च यत्स्थाणुवदिति द्वितीया । स्थिरलिङ्ग च यदिति तृतीया सूचिता । एतेन च तृतीयेन व्याख्यानेन सदाशिवव्यूहान्तर्गतेषु पञ्चसादाख्येषु यद्द्वितीयममूर्तं सादाख्य तदनुगतमुक्तम् । यथोक्त वातुलशुद्धे—

'आदिशक्तेर्दशांशेन अमूर्तस्य समुद्भवः । आदिशक्तेरमूर्तत्वादमूर्तमिति कीर्तितम् ॥ अमूर्तत्वात्कलाहीनं तद्रूपं लिङ्गवद्भवेत् । सूर्यकोटिप्रतीकाशं ज्योतिस्तम्भाकृति स्मृतम् ॥ तस्या ह्यन्तर्गता मूर्तिर्मूर्तादिरिति चोच्यते । एतद्धि दिव्यलिङ्गं तु मूलस्तम्भमिहोच्यते' इति ॥ ८० ॥

अहिर्बुध्न्य इति । बुध्नः मूलम्, 'मूलं बुध्नोऽङ्घ्रिनाम च' इत्यमरः । तत्र बुध्ने ब्रह्माण्डमूलभूते पाताले साधुः बुध्न्यः पातालवर्तीति यावत्; तादृशोऽहिः सर्पः शेषः इति यावत् । शेषस्य च तामसमूर्तित्वं रुद्रात्मकसंकर्षणाविर्भावस्थानत्वं च विष्णुपुराणे द्वितीयेंऽशेऽभिहितम् । यथा 'पातालानामधश्चास्ते विष्णोर्या तामसी तनुः । शेषाख्या यद्गुणान्वक्तुं न शक्ता दैत्यदानवाः ॥ कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः । संकर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम्' इति । इदं च पदद्वयात्मकमेकं नाम ॥ ८१ ॥

दिगम्बर इति । दिश एव अम्बराणि यस्य स तथोक्तः । इदं च दारुकावने मुनिवधूपरीक्षार्थमुपात्ताया मूर्तेर्नाम । एतेन सर्वसंमोहकत्वमुक्तम् ॥ ८२ ॥

**अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।**
**शाश्वतः खण्डपरशुरजः पाशविमोचकः ॥**

अष्टमूर्तिरिति । पञ्चभूतानि चन्द्रार्कावात्मा चेत्यष्टौ मूर्तय, शरीराणि यस्येत्यष्टमूर्तिः । पृथिव्याद्यभिमानिन्यः शर्वादिमूर्तयः वक्ष्यमाणाश्च यद्यपि तथाप्यनेन समष्ट्यभिमानिनी विश्वंभराख्या मूर्तिरुच्यते । यथोक्तं लैङ्गे— 'अष्टमूर्तिर्जगद्व्याप्य स्थितोऽयं परमेश्वरः । चराचराणां भूतानां धाता विश्वंभरात्मकः । भवश्चेत्युच्यते देवैर्भगवान्वेदवादिभिः' इति । वायुसंहितायामपि— 'तस्य देवादिदेवस्य मूर्त्यष्टकमिदं जगत् । भूम्यम्भोऽग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः । अधिष्ठिता महेशस्य शर्वाद्याभिश्च मूर्तिभिः । चराचरात्मकं विश्वं धत्ते विश्वंभरात्मना' इति ॥ ८३ ॥

अनेकात्मेति । अनेक आत्मा यस्य स तथोक्तः; प्रपञ्चशरीरात्मक इत्यर्थः, 'सर्वो ह्येष रुद्रः' इत्यादिश्रुतेः । 'यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता । सा सा गौरी महादेवी स स देवो महेश्वरः' इत्यादिशैवलैङ्गादिस्मृतेश्च ॥

सात्त्विक इति । सत्त्वे भवः सात्त्विकः । अध्यात्मादित्वाट्ठञ् । त्रिगुणात्मकमायारूपोपाधौ विद्यमानस्य सत्त्वस्य

संहाररुद्रं प्रति शरीरतया शरीरिणो रुद्रस्य तत्रभवनरूपसत्त्वौचित्यात् । तमोगुणोपाधिको रुद्र इति प्रसिद्धिस्तु न तमोगुणशरीरतया किं तु संहारे तमोगुणस्योपकरणत्वेन गृहीततया। यथोक्तं स्कान्दे सूतसंहितायाम्— 'यस्य मायागतं सत्त्वं शरीरं स्यात्तमो गुणः । संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः' इति । अत एव मार्कण्डेयपुराणे खिलरूपेषु रहस्याध्यायेषु प्राधानिकाख्ये प्रथमाध्याये 'सर्वस्याद्या महालक्ष्मीस्त्रिगुणा सकलेश्वरी' इति त्रिगुणात्मकमायाभिमानिन्यां देवतायां लक्ष्मीत्वमुपदिश्य 'बभार रूपमपरं तमसा केवलेन हि । सा भिन्नाञ्जनसंकाशा दंष्ट्राञ्चितवरानना' इत्यादिना तमःप्रधानाविद्याभिमानिनीमेकां मूर्तिम् 'सत्त्वाख्येन विशुद्धेन गुणेनेन्दुप्रभां दधौ। अक्षमालाङ्कुशधरां वीणापुस्तकधारिणीम्' इत्यादिना सत्त्वप्रधानाविद्याभिमानिनीं द्वितीया मूर्तिमपि तस्या उपदिश्य 'अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् । युवां जनयतं देव्यौ मिथुने स्वानुरूपतः' इति ते मूर्ती प्रति तामसत्वसात्त्विकत्वानुगुणस्त्रीपुंसंसर्गविषयकं मूलदेव्या आज्ञापनमुक्त्वा वर्णितम्— 'महाकाली भारती च मिथुनेऽसृजतां स्वयम् । एतयोरपि नामानि रूपाणि च वदामि ते । नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् ।

जनयामास पुरुषं महाकाली सितां स्त्रियम् । स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः । त्रयीविद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा' इति । अत्र 'श्वेताङ्गम्' 'सिताम्' इति विशेषणाभ्यां रुद्रसरस्वत्योः सत्त्वविग्रहत्वं सूचितम् । ननु 'स्वानुरूपतः' इत्येतदुक्तार्थविरुद्धमिति चेत्, न; प्रत्युत तस्यैवानुकूलत्वात् । तथा हि— त्रिगुणात्मिका माया न कदाचिदेकेनापि गुणेन हीना भवति, किमुत द्वाभ्याम्; केवलतामसत्वादिव्यपदेशस्तु एकेनेतरयोरभिभूततया, गुणानां सर्वथा अन्योन्यसंसृष्टत्वस्वाभाव्यात् । यथोक्तं सांख्यसप्तत्याम्— 'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः' इति । तथा सांख्याभियुक्तवचनमपि— 'अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः । रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः । तमसश्चापि मिथुने ते सत्त्वरजसी उभे । उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते । नैषामादिः संप्रयोगो वियोगो वोपलभ्यते' इति । तथा च या तामसी मूर्तिः स्थिता तया एकमात्रगुणावलम्बनेन कस्यचिदपि कार्यस्य जनयितुमशक्यतया अवश्यं गुणान्तरमिथुनतासंपत्तिरपेक्षणीया, तथा सात्त्विक्या अपि । एवं च यद्गुणमिथुनमादाय कार्यं

जनयितव्यं तदादाय जनयतामिति 'स्वानुरूपत.' इत्यस्यार्थः। 'तमसश्चापि मिथुने ते सत्त्वरजसी उभे' इति प्रागुदाहृतवचनेन सत्त्वस्य रजसो वा तमोमिथुनत्वयोग्यतया प्रकृते तामसी देवी सत्त्वमिथुनमादाय कार्यं सृष्टवती; तत्रापि 'श्वेताङ्गम्' इति विशेषणेन शरीरस्य सात्त्विकत्वे सिद्धे पारिशेष्यात् सूतसंहितावचनानुरोधाच्च तमस उपकरणत्वं सिद्धम्। यद्वा सत्त्वं प्रयोजनमस्य प्रवर्तकत्वेनेति सात्त्विकः। 'प्रयोजनम्' इति ठञ्। सत्त्वप्रवर्तक इत्यर्थ.। तथा च श्रुति.— 'महान्प्रभुर्वै पुरुष· सत्त्वस्यैष प्रवर्तकः' इति। यद्वा सत्त्वानि तत्तज्जीवोपाधिभूतविधागतानि प्राचुर्येण प्रस्तुतानि अस्मिन्नेतदधीनानीत्यर्थः। राज्ञि राष्ट्रमितिवत् सप्तम्यर्थेऽपि तेऽस्मिन्नर्थे 'समूहवच्च बहुषु' इति समूहवद्भावातिदेशात् 'अचित्तहस्तिधेनोष्ठक्' इति ठक्, सर्वप्राणिनिष्ठसत्त्वोद्रेकस्य भगवदधीनत्वात्। अत एव शिवस्य 'सत्त्वान् सुखं च ज्ञानं च' इति सुखहेतुभूतसत्त्वोद्रेकप्रवर्तकत्वलक्षणम् शिवमृडशंभुशंकरादिनामप्रतिपन्नं सुखकरत्वमप्युपपन्नम् ॥ ८५ ॥

शुद्धविग्रह इति। सत्त्वगुण एव शरीरमीश्वरस्येति यत् पूर्वनाम्ना प्रतिपादितं तस्येदमुपपादकं शुद्धविग्रह इति, तमःशरीरत्वे हि नीलविग्रह एव स्यादित्यभिप्रायकम् ।

इदं च उपलक्षणम्, तमःशरीरत्वे निद्रापारवश्यानुचित-विषयक्रौर्यादयोऽपि स्युः; न स्युश्च सुखजनकत्वादय इति। यथोक्तमस्मद्दीक्षितैर्ब्रह्मतर्कस्तवे— 'निद्रालुता न तव शंकर शक्यशङ्का क्रौर्यं किमप्यनुचिते विषये न दृष्टम्। नान्योऽपि कश्चन गुणस्तमसो विकारः शङ्क्यः कथं तव बुधैस्तमसाभिभूतिः॥ संख्यातिशायिगुण सत्त्वनिधिस्त्वमेव ज्ञानं सुखं च यदि सत्त्वगुणादवाप्यम्। जानीमहे तदुभयं त्वदधीनमीश जाबालसूनुवमुखैर्ननु जन्मभाजाम्' इति। यद्वा शुद्धो निर्दोषो विग्रहो यस्य स तथा, 'विजरो विशोकः' इति श्रुतेः। 'अप्राकृतशरीरं तमतिमन्मथरूपिणम्। घृतरीतिघनीभूतसच्चिदानन्दविग्रहम्' इति स्मृतेश्च॥ ८६॥

शाश्वत इति। शश्वत् सदा साधुः शाश्वतः। 'कालात्साधुपुष्प्यत्पच्यमानेषु' इति साध्वर्थे अण्प्रत्ययः। 'अव्ययानां भमात्रे' इति टिलोपस्तु न भवति। 'बहिषष्टिलोपो यञ्च' इति टिलोपविधानेन 'येषां च विरोधः शाश्वतिकः' इति निर्देशेन वा तस्य अनित्यत्वज्ञापनात् सदा वर्तमान इति यावत्। तथा चाथर्वशिखायां रुद्रस्य वचनम्— 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो

व्यतिरिक्तः' इति ॥ ८७ ॥

खण्डपरशुरिति । परान् शृणातीति परशुः । 'आङ्‌परयोः खनि शृभ्यां डिच्च' इत्यौणादिकः कुप्रत्ययः । गजासुरवधे खण्डाः परशवोऽस्येति खण्डपरशुरिति टीकासर्वस्वे ॥

अज इति । न जात इत्यजः । 'अन्येष्वपि दृश्यते' इति भूताधिकारे डप्रत्ययः । तथा च श्रुतिः— 'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इति ॥ ८९ ॥

पाशविमोचक इति । पाशः संसारः । तथा हि त्रिपदार्थवादिनः शैवा आहुः— पशुः पाशः पतिरिति त्रयः पदार्थाः । तत्र पशुर्नाम जीवः पाशेन बन्धनीयत्वात् पाशो नाम तद्बन्धहेतुरविद्या तत्कार्याणि च । यथोक्तं शिवपुराणे वायवीयसंहितायाम् श्वेताश्वतरोपनिषदः कृत्स्नाया अध्यर्धापनपरे चतुर्थे अध्याये वायुवचने 'पशुपाशपतिज्ञानं यत्तत्प्रोक्तं मया पुरा । तत्र निष्ठा परा कार्या पुरुषेण सुखार्थिना' इत्युपक्रम्य 'अजडं च जडं चैव नियन्तृ च तयोरपि । पशुः पाशः पतिश्चेति कथ्यते त्रितयं क्रमात् । अक्षरं च क्षरं चैव क्षराक्षरपरं तथा । तदेतत्त्रितयं भूयः कथ्यते तत्त्ववेदिभिः' इति । 'अक्षरं पशुरित्युक्तं क्षरं पाश उदाहृतः ।

क्षराक्षरपरं तत्त्वं पतिरित्यभिधीयते । प्रकृतिः क्षरमित्युक्ता पुरुषोऽक्षर उच्यते । तावुभौ प्रेरयत्यन्य. स पतिः परमेश्वरः । माया प्रकृतिरुद्दिष्टा पुरुषो मायया वृतः । संबन्धान्मलकर्मभ्यां शिवः प्रेरक ईश्वरः' इत्यादिना । लैङ्गेऽपि— 'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः । चतुर्विंशतितत्त्वानि पाशाः स्युः परमेष्ठिन. । तैः पाशैर्मोचयत्येकः शिवो जीवानुपासितः' इति । अविद्याकार्याणि च बहुधा भवन्ति मनोबुद्ध्यहंकाराः पञ्चतन्मात्राणि भूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति त्रयोविंशति', त एव पाशा इति केचित् । दशेन्द्रियाण्येव पाशा इत्यन्ये । अविद्यास्मितारागद्वेषाभिनिवेशाख्यपञ्चक्लेशात्मकाः तमोमोहमहामोहतामिस्रान्धतामिस्ररूपाविद्यापर्वभेदा इत्येके; त्रयो गुणा इतीतरे; कर्तृत्वभोक्तृत्वाभिमाना इत्यपरे । तथा च सर्वेष्वेतेषु पाशपदप्रयोगो लैङ्गे— 'चतुर्विंशतितत्त्वानि पाशाः स्युः परमेष्ठिन. । दशेन्द्रियमयैः पाशैरन्तःकरणसंभवैः । पञ्चक्लेशमयैः पाशैः पशून् बध्नाति शंकरः । अविद्यामस्मितां रागं द्वेषं च मुनिसत्तमाः । वदन्त्यभिनिवेशं च क्लेशान्पाशत्वमागतान् । तमो मोहो महामोहस्तामिस्रमिति पण्डिताः । अन्धतामिस्रमित्याहुरविद्यां पञ्च-

धा स्थिताम् । अविद्यां तम इत्याहुरस्मितां मोह इत्यपि । रागमाहुर्महामोहं द्वेषस्तामिस्रमुच्यते । अन्धतामिस्रमित्याहुस्तथैवाभिनिवेशनम्' इति । 'ब्रह्मादिस्तम्बपर्यन्तान्पशून्बध्वा महेश्वरः । त्रिभिर्गुणमयैः पाशैः कार्यं कारयति स्वयम्' इति । नादृशपाशानां मुक्तिश्च भक्तिलभ्यात् भगवत्प्रसादादेव, नान्यस्मात् । तथा चोक्तं लैङ्गे—'स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । अविद्यापाशबद्धानां नान्यो मोचक इष्यते । तमृते परमात्मानं शंकरं परमेश्वरम्' इति । वायवीयसंहितायामपि—'भावातिशयलभ्येन प्रसादेन मलक्षय' इति । मन्त्रोपनिषद्यपि अन्वयव्यतिरेकाभ्यां दर्शितम्— संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति । अस्यार्थः— क्षरं क्षरणशीलं प्रधानं पाशः; अक्षरम् अविनाशी पुरुषो जीवः पशुः 'अक्षरं पशुरित्युक्तं क्षरं पाश उदाहृतः' इति प्रागुदाहृतशिवपुराणवचनात्; एतद्द्वयं संयुक्तं तयोः संयन्धस्यानादित्वात्; नन्वनादिरपि प्रागभाववत् कुतो न नश्यति? अत आह— व्यक्तेति; व्यक्तं प्रधानकार्यभूतः प्रपञ्चः अव्यक्तं तत्कारणभूतं प्रधानम्,

'व्यक्तं कार्यदशापन्नं शरीरादि घटादि च । तत्कारणदशापन्नमव्यक्तमिति कथ्यते' इति शिवपुराणवचनात्; व्यक्तं चाव्यक्तं चेति समाहारद्वन्द्वः । एवंभूतं विश्वं समस्तम् ईशो भरते बिभर्ति; सत्यमयं नाशशील इति तथापि ईश्वरस्योपेक्षयानुवर्तत इति भावः । 'स एष बध्यते पाशैः सुखदुःखात्मकैः पशुः । लीलासाधनभूतोऽयमीश्वरस्येति सूरयः' इति शिवपुराणोक्तरीत्या लीलाविलयप्रतिसंधानमेव शिवस्योपेक्षाया मूलम्; दीक्षितकृते तु शिवस्तवे इदमेवान्यथोत्प्रेक्षितम्— 'आ पातालकमा विरिञ्चगृहमत्यगाहतप्रक्रमान् पाशेन ग्रथयन्द्विधा च दशधा भिन्नेन सर्वान्पशून् । मुच्यन्तां स्वयमेव मोचयतु वा कश्चिद्विमान्शक्तिमानित्युन्मत्त इव प्रतीक्षितुममून्पश्यन्नुदास्ते शिवः' इति, नन्वनादिरविद्यासंबन्धः ईश्वरस्याप्यस्ति; एवं सति स कथमीष्टे? जीवाः कथं नेशते? तत्राह— 'अनीशश्चात्मा बध्यते भोक्तृभावात्' इति भोक्तृत्वप्रतिसंधानरूपपाशबद्धत्वात् जीवो अनीश इत्यर्थः; तादृशपाशमोचने क उपायः; तत्राह— 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति; प्रकारकार्त्स्न्यं सर्वशब्दार्थः, चतुर्विंशतितत्त्वात्मकत्वपञ्चक्लेशात्मकत्वादिनानाप्रकारावच्छिन्नैः पाशै-

मुच्यत इत्यर्थः । तथा 'घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति । तथा 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति' इति । ननु उदाहृतलैङ्गवचने भक्त्या पाशनिवृत्तिरुक्ता श्रुतिषु ज्ञानादित्युच्यत इति विरोधः इति चेन्, न; 'भज सेवायाम्' इति धातोः भक्तिशब्दः सेवावाची; सेवा च सेव्यप्रीतिकरव्यापारविशेषः । स च कायिकवाचिकमानसिकभेदात् त्रिविधः, तत्र प्रणामादिरूपात् कायिकात् प्रणवादिजपरूपाद्वाचिकादपि सत्यानन्दादिस्वरूपानुसंधानलक्षणं मानसिकं भजनं अभ्यर्हितोपाय इति लिङ्गपुराणतात्पर्यात् । तथैवाविष्कृतं तत्रैव— 'भज इत्येष वै धातुः सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी । भजनं भक्तिरित्युक्तं वाङ्मनःकायकर्मभिः । सत्यः सर्वगः इत्यादि शिवस्य गुणचिन्तनम् । रूपापदानचिन्तां वा मानसं भजनं विदुः' इत्यादिना । एवंभूतपाशमोचक इत्यर्थः । मुञ्चतेर्मोचयतेर्वा मोचक इति रूपम् । अण्यन्तपक्षे मुञ्चतेर्विस्रंसनार्थात् धातोः कर्तरि ण्वुलि शेषषष्ठ्या समासः। पाशानां मोचक इति। ण्यन्तपक्षे तु विश्लेषोपसर्जनकविश्लेषणा-

र्थोद्वातो. मागात्यागलक्षणया कर्मकर्तृभावोचितविश्लेषमात्रप-र्यवसानात् पुनर्विश्लेषणार्थविवक्षायां 'निवृत्तप्रेषणाद्धातोः प्रा-कृतेऽर्थे णिजुच्यते' इति णिचि ततो ण्वुलि पाशेभ्यो मोचक इति पञ्चमीयोगविभागात् समासः ॥ ९० ॥

**मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।**
**पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥**

मृड इति । मृडयति सुखयतीति मृडः । 'मृड सुखने' इति धातोः 'इगुपधज्ञाप्रीकिर. कः' इति कः । सुखजनक इत्यर्थः । इदं च श्रुतिप्रसिद्धं नाम ; 'रुद्र मृडानार्भव मृड धूर्ते' इति ॥ ९१ ॥

पशुपतिरिति । पशूनां प्रागुक्तानां पतिः स्वामी । पाते-रौणादिके डतिप्रत्यये रक्षको वा । तत्र रक्षकत्वं तत्पाश-मोचकत्वम्, स्वामित्वं तु पशून् बद्धुं बन्धानमुक्त्वैव भ्रम-यितु तेषु स्वैकशरणान्मोक्तुं च स्वातन्त्र्यम् । तथा च श्रुतिः— 'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थिति-बन्धहेतुः' इति । तथा च हरिवंशे— 'पालयामि पशून्यस्मात्सृजामि च यदृच्छया । तेषां च पतिरेवाहं तस्मात्पशुपतिः स्मृतः' इति । द्रोणपर्वण्यपि— 'सर्वा-

न्यश्च पशून्पाति तैश्च यद्रमते पुनः । तेषामपि पतिर्यश्च तस्मात्पशुपतिः स्मृतः' इति । अत्र श्लोकद्वयेऽपि तत्पालकत्वं तत्स्वामित्वं चेति व्युत्पत्तिद्वयमेव विवक्षितम्, पतिशब्दस्यैकत्र योगादितरत्र योगरूढेश्च। 'सृजामि च यदृच्छया' 'तैश्च यद्रमते पुनः' इति द्वयमपि क्रमेण पालनस्य स्वामित्वस्य चोपपादकम्, स्वेनैव सृष्टस्यावश्यपालनीयत्वात् स्वामिनः स्वे प्रीत्यौचित्यात्। न तु व्युत्पत्त्यन्तरपरम्, अनुशासनाभावात्। इदं च पाशुपत्यम् 'सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि' इति रुद्रकृतवरवरणप्रदर्शनव्याजेनानादिसिद्धतया शिवस्य श्रुतौ दर्शितम्। ननु वरणलब्धत्वोक्त्याऽऽगन्तुकतया कथमनादिसिद्धत्वमिति चेत्, शृणु—'सोऽब्रवीत्' इति भूतार्थलङ् प्रयोगात् पूर्वकल्पवृत्तान्तोऽनया श्रुत्या सर्गाद्यकालप्रवृत्तयानूद्यत इति वक्तव्यम्। पूर्वकल्पादावपि इयमेव श्रुतिरित्थमेव लब्धा बोधयन्ती वरवरणस्य तत्पूर्वकल्पसिद्धतां ब्रूते। एवं तत्पूर्वकल्पे तत्पूर्वकल्पेऽपीत्यनादित्वसिद्धिः। अन्यथा गृहपुरोडाशादिविषयकवरवरणार्थवादेषु नित्यानित्यसंयोगविरोधस्य परिहर्तुमशक्यत्वात्। यत्तु निर्वचनान्तरं हरिवंशे 'ग्राम्यारण्यानां यत्पतिस्त्वं पशूनां ख्यातो देवः पशुपतिः सर्वकामः' इति, तत्तु पशुभिः दत्तं प्रा-

च श्रुतिप्रसिद्धं नाम, 'अम्बिकापतय उमापतये पशुपतये नमो नमः' 'नमस्तेऽस्तु पशुपते त्रायस्वैनम्' इति ॥ ९२ ॥

देव इति । दीव्यतेर्देवः । पचादित्वादिगुपधलक्षणस्य कस्यापवादोऽच्प्रत्ययः । जगत्सृष्ट्यादिक्रीडाशालित्वर्थः । तथा च ब्रह्मसूत्रम्— 'लोकवत्तु लीलाकैवल्यम्' इति । यद्वा स्वामिपर्यायो देवशब्दः, नरदेव इतिवत् । असङ्कुचितस्वामित्वं च शिवस्यैव, 'सर्वाधिपत्यं कुरुते महात्मा' इति श्रुतेः, 'यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः' इति अभियुक्तोक्तेश्च । इदं च श्रुतिसिद्धं नाम 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' इति श्रुत्यन्तरसिद्धरुद्रप्रतिपादनपरच्छन्दोगानां देवव्रते 'ये देवा देवा दिविषदः स्थ तेभ्यो वो देवा देवेभ्यो नमः, ये देवा देवा अन्तरिक्षसदः स्थ ... पृथिवीसदः स्थ' इत्यादिषु प्रतिपर्यायं देवशब्दप्रयोगात् ॥ ९३ ॥

महादेव इति । महांश्चासौ देवश्च महादेवः । 'आन्महत' — इति आत्वम् । तथा च श्रुतिः — 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' इति । महत्त्वं च सकलपूज्यत्वाद्वा त्रिभुवनं प्रमाणतो महत्त्वाद्वा । यथोक्तं साम्बपुराणे— 'पूज्यते यः सुरैः सर्वैर्महांश्चैव प्रमाणतः । धातुर्महति पूजायां महादेवस्ततः स्मृतः' इति । हरिवंशे तु

महत्त्व सर्वज्ञत्वात् सर्वरक्षकत्वाच्चेत्युक्तम्— ' सहस्राक्षोऽयुता-
क्षो वा सर्वतोक्ष इवेक्षते । यश्च विश्व महत्पाति महादेव-
स्तत स्मृत ' इति । इद च चन्द्राभिमानिन्या मूर्तेर्नाम ।
यथोक्त शिवपुराणे— ' आप्याययति यो नित्यममृतांशु-
र्निशाकर । महादेवस्य सा मूर्तिर्महादेवसमाह्वया ' इति ।
अमृतप्रदानेन सर्वरक्षकचन्द्राभिमानिमूर्ते रक्षकत्वप्रयुक्त-
महत्त्वघटितमहादेवपदवाच्यतौचित्यात् । इद च श्रुतिप्रसिद्ध
नाम ' तत्पुरुषाय विद्महे महादेवाय धीमहि ' इति ॥ ९४ ॥

**अव्यय** इति । व्येति विविधतया गच्छति जायतेऽस्ति
वर्धते विपरिणमतेऽपक्षीयते नश्यतीति वार्ष्यायणिपरिगणिता
ये षट् भावविकारास्तान्प्रतिपद्यत इति व्यय , स नेत्यव्यय.
जननादिविकारशून्य इत्यर्थ । यद्वा अव्ययानि दश प्राग्-
क्तानि ज्ञानादीनि, तद्वानव्यय । इद च श्रुतिसिद्ध नाम
' महान्प्रभुर्वै पुरुष सत्त्वस्यैष प्रवर्तक । सुनिर्मलामिमा
शान्तिमीशानो ज्योतिरव्यय ' इति ॥ ९५ ॥

**हरि**रिति । हरति पापानीति हरि । ' इन् सर्वधातुभ्य '
इति हरतेरौणादिक इन्प्रत्यय । अस्य विष्णुनामत्वात्
पापहरणप्रवृत्तिनिमित्तकतया उत्कृष्टनामत्वाच्च शिवनामत्वमु-
चितम् । यथोक्त हरिवंशे कैलासयात्रायां शिववचनम्—

'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा' इति । आश्वलायनगृह्ये शूलगवेऽप्युक्तम्— 'यान्युच्छ्रितानि नामधेयानि तानि महादेवस्य' इति ॥ ९६ ॥

पूषदन्तभिदिति । दक्षाध्वरे वीरभद्रः पूष्णो दन्तानभिनदिति सर्वपुराणप्रसिद्धम् । यथोक्तं शिवपुराणे— 'पूष्णो दशनपङ्क्तिं च दीप्तां मुक्तावलीमिव । बिभेद धनुषः कोट्या ततः सोऽस्पष्टवागभूत्' इति । 'सत्सूद्विष—' इत्यादिना क्विप् ॥ ९७ ॥

अव्यग्र इति । व्यग्रः सम्भ्रान्तहृदयः, स नेत्यव्यग्रः । लोके हि महति युद्धे प्रवृत्तानां कोपादिनिमित्तं चित्तवैयग्र्यं दृष्टम्, तमोभिभूतत्वात् । नैवं परमेश्वरे वशीकृततमस्के । स हि शिवद्रोहिणो दक्षस्य उचितदण्डेन नैर्मल्यं सपापानुमहार्थं प्रवृत्तो न कोपान्धतयेति भावः । एतच्च पूषदन्तभिन्नित्यादिभिः भगनेत्रभिदित्यन्तैर्नामभिः प्रतिपाद्यमानानां निग्रहात्मककर्मणां तमोभिभवप्रयुक्तत्वशङ्कानिरासेनानुजिघृक्षाप्रयुक्तत्वज्ञापनार्थम् ॥ ९८ ॥

दक्षाध्वरहर इति । दक्षस्याध्वरो दक्षाध्वरः । दक्षाध्वरं हरतीति दक्षाध्वरहरः । 'हरतेरनुद्यमनेऽच्' इत्यच् प्रत्ययः ॥

र इति। हरति उपसंहरति सर्वमिति हरः । पचाद्यच् ।
इद च श्रुतिप्रसिद्ध नाम 'क्षरं प्रधानममृताक्षरं हरः' इति ।
इदं च सृष्टिस्थितिसंहारनिर्वाहिकासु भवमृडहराख्यासु सं-
हाररुद्रमूर्तिषु तृतीयमूर्तेर्नाम । अस्य च नाम्नो महती
प्रशंसा शिवागमेषु । यथोक्तम्— 'अष्टवारं हर इति
जले मग्नो जपेन्नरः । अघमर्षणमेवैतत्सर्वपापैः प्रमुच्यते'
इति । 'आहर' 'प्रहर' इति वदन्नेव मृतः कश्चिन् हरग-
न्धगन्धादपि शिवकिंकरैः कैलासं नीत इति महती चाख्या-
यिका पुराणेषु ॥ १०० ॥

**भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।**
**अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥**

भगनेत्रभिदिति । इदमपि दक्षाध्वरध्वससमये कृत-
मिति शिवपुराणादिषु प्रसिद्धम् । यथोक्तं वायवीयसंहि-
तायाम्— 'भगस्य विपुले नेत्रे शतपत्रसमप्रभे । प्रसह्यो-
त्पाटयामास भद्रः परमवेगवान्' इति ॥ १०१ ॥

अव्यक्त इति । व्यक्तः स्पष्टो नेत्यव्यक्तः । 'न संदृशे
तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' 'यतो
वाचो निवर्तन्ते अप्राप्य मनसा सह' 'सूक्ष्मातिसूक्ष्मं कलि-

लस्य मध्ये' 'अणोरणीयान्' इत्यादिश्रुते ॥ १०२ ॥

सहस्राक्ष इति । सहस्राणि अनन्तानि अक्षीणि अस्य सहस्राक्षः । 'शत सहस्रमयुतमित्यनन्तस्य वाचकम्' इति निघण्टुके । यानि सर्वेषामक्षीणि तान्येव सर्वान्तर्यामिणो भगवत प्रपञ्चशरीरकस्याक्षीणि कृत्वा सहस्राक्षत्वम् । तथा च श्रुति — 'सर्वाननशिरोग्रीव सर्वभूतगुहाशय । सर्वव्यापी च भगवांस्तस्मात्सर्वगत शिव ' 'विश्वतश्चक्षुरुत विश्वतोमुख, विश्वतो बाहुरुत विश्वतस्पात' 'सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात्' इति । इदं च श्रुतिप्रसिद्ध नाम 'नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे' इति ॥ १०३ ॥

सहस्रपादिति । पूर्वेण व्याख्यातम् ॥ १०४ ॥

अपवर्गप्रद इति । मोक्षप्रदत्व च 'यदा चर्मवदाकाशम्' इत्यादिप्रागुदाहृतश्रुतिप्रसिद्धम् ॥ १०५ ॥

अनन्त इति । अन्तो निश्चय परिच्छेद, तद्रहितोऽनन्तः । 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति श्रुत्या कालपरिच्छेदेन, 'सर्वव्यापी च भगवांस्तस्मात्सर्वगत शिवः' इति श्रुत्या देशपरिच्छेदेन, 'न स्त्री न षण्ढो न पुमान्' इति

शुद्ध वस्तुपरिच्छेदेन च रहित इत्यर्थः । तथा च श्रुतिः— 'अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशंभुवम्,' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ॥ १०६ ॥

तारक इति । तारयति संसारादिति तारकः । तारयतेः ण्वुल् । यद्वा तारयतेर्ण्यन्तात् पचाद्यचि स्वार्थे कः । अत एव श्रुताविदं नाम तार इत्येव श्रुतम् । 'नमस्ताराय नमः शंभवे च' इति; अथर्वशिरस्यपि 'अथ कस्मादुच्यते तारो यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहाभयात्तारयति तस्मादुच्यते तारः' इति । यद्वा तारः प्रणवः तमाचष्टे अविमुक्तोपासकानामन्त्यकाले इति तारकः । यद्वा तारशब्दात् '—तदाचष्टे' इति ण्यन्तात् ण्वुलि रूपम् । तथा च जाबालश्रुतिः 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति' इति ॥१०७॥

परमेश्वर इति । परमः उत्कृष्टश्चासावीश्वर इति कर्मधारयः । 'सन्महत्—' इत्यादिना समासः । सर्वकर्मफलदानस्वातन्त्र्य चास्य पारम्यम् । तथा च श्रुतिः— 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तत्कारणं सांख्ययोगाभिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः' 'येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्व-

विध. । तेनेशितं कर्म निवर्तते ह पृथ्व्याप्यतेजोनिलखानि चिन्त्यम्' 'कर्माध्यक्षः सर्वभूताधिवासः' इति च ।

अत्र तत्तदुपासकाना कामांस्ते ते देवा विदधति, एवं शिवोऽपि स्वोपासकानामेव कामान्विदधातीति शङ्कां व्यावर्तयितुम् 'एकः' इति पदं प्रथमोदाहृतश्रुतौ प्रयुक्तम् । तदभिप्रायश्च सम्यगुद्घाटितो वायवीयसंहितायाम्—'यथैव पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता । तथा सर्वस्य सम्प्रीत्या प्रीतो भवति शंकरः' इति । एवं च सर्वेषां शिवप्रसूतत्वात् अस्वतन्त्रत्वाच्च यथा अस्वतन्त्रशिशूपलालनेन प्रीतः पितैव स्वतन्त्रः फलप्रद. एवमस्वतन्त्रेन्द्रादिदेवताराधनेन प्रीत तत्पिता स्वतन्त्र. परमेश्वर एव फलप्रद इति पर्यवसानात् । 'येनावृतम्' इति श्रुतावपि सर्वकर्मफलप्रदत्वमेवोक्तम् । यद्यपि– तेनेशितं तेन ईश्वरेण स्वीकृतं तदर्पणबुद्धयानुष्ठितमिति यावत्; एवंभूतं कर्म निवर्तते फलमजनयित्वैव नश्यति, न केवलं तस्यैव कर्मणो नाशः, किं तु पृथ्व्याप्यतेजोनिलखान्यपि निवर्तन्ते भूतानि भौतिकानि शरीरादीन्यपि निवर्तन्ते कैवल्यमेव भवति इति चिन्त्यं बोध्यमित्यर्थः; 'येनावृतमिदं सर्वं कालः कालात्मनोऽपि य. । तेनेशितमिदं कर्म सह भूतैर्निवर्तते' इति वायुसंहितावचनात्; तथापि फल-

प्रतिमधानेन कृताना कर्मणां तत्तत्फलं ददाति, स्वार्पणबु-
द्ध्यानुष्ठितानां तु सर्वकर्मफलनाशनद्वारा कैवल्ये पर्यवसानं
कारयतीति तदर्थात् । तथा चोक्तं कौर्मे ईश्वरगीतासु शिव
वचने— 'गृणन्ति सततं वेदा मामेकं परमेश्वरम् । य-
जन्ति विविधैरग्निं ब्राह्मणा वैदिकैर्मखैः ॥ अहं हि सर्वय-
ज्ञानां भोक्ता चैव फलप्रदः । सर्वदेवतनुर्भूत्वा सर्वात्मा
सर्वसंस्थितः ॥ ये चान्यदेवताभक्ता पूजयन्तीह देवताः ।
मद्भावनासमायुक्ता मुच्यन्ते तेऽपि भावत ॥ तस्मादनी-
श्वरानन्यांस्त्यक्त्वा देवान्विशेषतः । मामेव संश्रयेदीशं स
याति परमं पदम्' इति । अनेनैवाभिप्रायेणाथर्वशिरसाया-
मप्युक्तम्— 'सर्वमन्यत्परित्यज्य शिव एको ध्येय शिवं-
कर समाप्ताथर्वशिखा' इति । सर्वमन्यत्परित्यज्य शिव एको
ध्येय इत्यत्र हेतुरुच्यते— शिवकर इति । यतोऽन्ये
शिवं कर्तुमस्वतन्त्रा शिव एकः स्वतन्त्रः अत. सर्वमन्यत्
देवतान्तरभजनादिकं परित्यज्य शिव एको ध्येय शिवं-
करत्वात् इति । यद्यपि शिवपदेनैव शिवयतीति शिव इति
व्युत्पत्त्या शिवंकरत्वमपि शक्यं प्रत्येतुम्, तथापि परमका-
रुणिकी श्रुति. पदान्तरेणैव तमर्थं स्पष्टमाह । न केवलमि-
यदेव, पाठविरामादेवावगन्तव्यामपि स्वसमाप्तिं स्वयमे-

वोद्घाटयति-- समाप्तायर्थवैशिखेति, इतः परं वक्तव्यं नास्ति परमरहस्यस्योपदिष्टत्वात् अत उपरम्यत इत्यभिप्रायमावेद्य मन्दाननुग्रहीतुम् । प्रकृते च ब्रह्मविद्याधिदेवता भगवत्यम्बिकैव स्तुतिव्याजेन शिवतत्त्वमुपदिशन्ती परमेश्वरनाम्नोपसंहृत्येदं द्योतयति-- यतोऽयं परमेश्वरः अतो मया स्तुत. अन्ये तु मापेक्षैश्वर्यशालिनो ब्रह्मादयः मत्कटाक्षोपजीविन. न मया स्तुत्याः। अहमेव स्वयमिदं वदामि-- 'जुष्टं देवेभिरुत मानुषेभिः यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं त सुमेधाम्' इति मद्वचनस्यैव श्रुतावाविष्कृतत्वादिति । एतन्नाम्ना स्तुतिपूरणेनान्यदपि सूचितम्-- यतः त्वं परमेश्वरः निरङ्कुशस्वातन्त्र्यशाल्यसि अतो मत्कृतस्तुतेरपि फलं तावकशरीरार्धप्राप्तिरूपमपि युक्तमयुक्तं वा दातुमर्हसि इति। रूढेन शिवनाम्ना उपक्रम्य तादृशेनैव परमेश्वरनाम्ना उपसंहारात्तन्मध्यपातिनामपि नाम्नामर्थोऽस्तद्वदेव भगवत्यसाधारणः इति ज्ञापितम् ॥ १०८ ॥

**एतदष्टोत्तरं नाम्नां शतमाम्नायसंमितम् ।**
**शंकरस्य प्रिया गौरी जप्त्वा शंभुप्रसाददम्॥**

एतदिति । एतत्पूर्वोक्तमाम्नायसंमितं वेदतुल्यं वेदवद-

वश्यपाख्यम्, यद्वा आम्नायैः वेदैः संमितं संयक्प्रमितं बोधितम्, वेदोक्तमिति यावत्। अत्रत्यानां नाम्नां प्रायेण वेदेषु दर्शनात् अदृष्टानामपि नाम्नामर्थस्य वेदेषु दर्शनात् साक्षात्परम्परया वा सर्वथा वेदगम्यतयैव अस्य स्तोत्रस्य इतरस्तोत्रापेक्षया अभ्यर्हितत्वमपि । जप्त्वेति आगमशासनस्यानित्यत्वात् इडभाव, जपित्वेत्यर्थ. ॥

**त्रैकाल्यमन्वहं देवी वर्षमेकं प्रयत्नतः ।**
**अवाप सा शरीरार्धं प्रसादाच्छूलपाणिनः ॥**

त्रैकाल्यमिति। त्रय एव कालास्त्रैकाल्यम्; 'वर्तमानसामीप्ये वर्तमानवद्वा' इति निर्देशात् ज्ञापकात चत्वारो वर्णाः चातुर्वर्ण्यमितिवत् स्वार्थे ष्यञ् 'स्वार्थिका अपि प्रत्ययाः क्वचित् प्रकृतिलिङ्गवचनान्यतिक्रामन्ति' इति चातुर्वर्ण्यं चातुर्वेद्यं द्वैतमित्यादिवत् प्रकृतिविरुद्धलिङ्गवचनोपपत्तिः । अन्वहमिति च वीप्सार्थकस्यानोर्यथार्थाव्ययत्वादव्ययीभाव । वर्षमेकमिति अत्यन्तसंयोगे द्वितीया । ननु वर्षस्यात्यन्तसंयोगो न भवति, एकस्मिन्वर्षे यावन्त्यहानि तावतामह्नां ये त्रयः काला. प्रातर्मध्याह्नसायाह्नाख्याः तेष्वेव कालेषु जप. कृत इति वर्षेणात्यन्तसंयोगाभावस्य स्ववाचे-

वोद्धादितत्वात्; न चायमेवात्यन्तसंयोगो वर्षस्य यत्तदे- कदेशीभूतान्वहस्त्रैकाल्यसंबन्ध इति वाच्यम्, तथा सति अ- त्यन्तपदवैयर्थ्यापत्ते.— इति चेत्; न, वस्तुतो यत्किंचिदव- यवावच्छेदेन संयोगस्य अत्यन्तसंयोगत्वाभावेऽपि दरिद्रस्य अपूपखण्डमप्यलभमानस्य अखण्डितैकापूपलाभे तत्रैव बहुत्व- दृष्ट्या 'एकापूपी मया लब्धा' इत्यत्र समाहारविवक्षावत् लोके उपासका दिनविच्छेदराहित्येन नैकं वर्षमुपासितुं क्षमाः, अन्यथा तु प्रतिदिनं त्रिषु कालेष्वपि जपः कृत इति अमुमेवात्यन्तसंयोग विवक्षित्वा द्वितीया कृता । एवं च अवच्छेद्यावच्छेदकयो त्रैकाल्यवर्षयोरपि एषैव द्विती- या । प्रयतत इति तपश्चरणौपयिकशमदमादिपरिग्रहप्रयासेने- त्यर्थः । शूलपाणिन इति । शूलेन पणितुं प्रहर्तुं शील- मस्यास्तीति शूलपाणि । 'सुप्यजातौ' इति णिनि. । तस्य शूलपाणिनः शूलायुधस्येत्यर्थः ॥

**यस्त्रिसंध्यं पठेन्नित्यं नाम्नामष्टोत्तरं शतम् ।**
**शतरुद्रत्रिरावृत्त्या यत्फलं लभते नरः ॥**

यस्त्रिसंध्यमिति तिस्रः संध्याः प्रातर्मध्याह्नसायमसमयरू- पाः । सम्यक् ध्यायन्त्यस्यामिति संध्या । 'आतश्चोपसर्गे'

इति अधिकरणे अच्प्रत्यय. स्त्रीत्वं स्वाभाव्यात् । यद्वा संधौ भवा संध्या । दिगादित्वाद्यत् । सायंप्रातःकालयोरहोरात्रसंधिभवत्वात्संध्यात्वम् । मध्याह्नकालस्य तु ब्रह्माण्डस्य कपालद्वयात्मकतया ज्योतिःशास्त्रप्रसिद्धेः कपालद्वयसंधिसमसूत्रवर्तिसूर्यावच्छिन्नकालभवत्वात् संध्यात्वम् । 'प्राह्णापराह्णमध्याह्नास्त्रिसंध्यम्' इति निघण्टुः । तिसृणां संध्यानां समाहारस्त्रिसंध्यम् 'तद्धितार्थ—' इति द्विगौ 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे वा टाबन्त इति नपुंसकत्वम् । शतरुद्रत्रिरावृत्त्येति । शतं रुद्राः प्रतिपाद्यत्वेनास्मिन्निति शतरुद्रः 'नमस्ते रुद्र मन्यवे' इत्याद्यनुवाकसमूहः । यद्यपि तत्र हिरण्यबाहुप्रमुखा रुद्राः शताद्धिका एव प्रतिपाद्यन्त इति ब्रह्माण्डपुराणोत्तरे 'षोडशावरणं चक्रं किं तद्रुद्राधिदैवतम्' इत्यध्याये श्रूयते । तथापि साग्रे शते शतयोजनविस्तीर्णः सागर इतिवत् शतरुद्र इति व्यवहारो द्वितीयशताभावतात्पर्येणोपपन्नः । तस्य त्रिरावृत्त्या त्रित्वसंख्यासंपादकाभ्यासेनेत्यर्थः । एवं च द्वावेवाभ्यासौ अनभ्यासरूप आद्यः पाठ एकः इत्याहत्य त्रिभिः पाठैरिति पर्यवसितोऽर्थः । ननु नैव युक्तम् 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति क्रियाभ्यावृत्तिनिष्ठसंख्यायाः

कृत्वसुचं विधाय तदपवादतया 'द्वित्रिचतुर्भ्यः सुच्' इति त्रिशब्दादपि क्रियाभ्यावृत्तिगणनसंख्यापरात्सुज्विधानेन तिसृभिरेवावृत्तिभिर्भाव्यम्, अनभ्यासपाठेन त्वेकैकेनेति चत्वारः पाठाः स्युरिति चेत्; न, सर्वत्र सुजन्तप्रयोगेषु अनभ्यासदशामन्तर्भाव्यैव तत्तत्संख्याप्रतीतेः सर्वसंप्रतिपन्नत्वात्। अन्यथा 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यादावपि चत्वार्यनुवचनानि स्युः। तथा च 'पञ्चदश सामिधेन्यो भवन्ति' इति श्रुतपाञ्चदश्यविरोध इति। सत्यमिदमेवम्, व्याकरणानुशासनविरोधस्य कथं परिहार इति चेत्, उच्यते - क्रियाभ्यावृत्तिगणन इत्यस्य नैवमर्थः — क्रियाया अभ्यावृत्तिस्तन्निष्ठं यद्गणनम् इति; किं तु क्रियाया यदभ्यावृत्तिगणनं क्रियानिष्ठं यदभ्यावृत्तिप्रयुक्तं गणनमिति। तेनायं सूत्रार्थः —द्व्यादिभ्यः स्वार्थे सुच् भवति, सा चेत् द्व्यादिशब्दप्रतिपाद्या संख्या क्रियानिष्ठा अभ्यासजन्या च स्यात्तदेति। तेन त्रिः पठतीत्यादौ अभ्यासजन्यत्रित्वसंख्याविशिष्टपाठानुकूलकृतिमानिति शाब्दबोधः। प्रकृते च आवृत्तिपदस्य तदुपलक्षितपाठपरत्वात् अभ्यासजन्यत्रित्वसंख्याविशिष्टेन पाठेनेत्येव शाब्दबोध इति। वैयाकरणास्तु क्रियाया अभ्यावृत्तिः तन्निष्ठं यद्गणनमिति व्याख्यायैव उक्तमर्थं समर्थयन्ते ।

तथा हि— क्रियाया अभ्यावृत्ति जन्मक्रियाजन्मगणन- वृत्ते कृत्वसुजिति । एव च त्रि पठतीत्यादौ क्रि याजन्मसु त्रित्वान्वयेन आवृत्तित्रित्वाभावात् त्रय एव पाठा सिध्यन्ति । न चैवमपि त्रीन्पदार्थान्भुञ्जाने पुरुषे भोज्यभेदेन क्रियाभेदे क्रियाजन्मत्रित्वसम्भवात् त्रिर्भुङ्क्ते इति प्रयोगापत्ति, अभ्यावृत्तिपदस्य जन्ममात्रपरत्वाभावात् । तथा हि— अभिराभिमुख्ये, आङ् तु अनर्थक, अनर्थका अपि हि निपाता सन्ति, 'अधिपरी अनर्थकौ' इति सूत्रकारवच नात् । यथोक्त महाभाष्ये— न पुन पुनरावृत्तिरभ्यावृत्ति किं तर्हि अभिमुखी वृत्तिरिति । विवृत च कैयटेन अभिमु- खी च प्रवृत्ति जन्मक्रियालक्षणेति । तथा च अभिमुखजन्म अभ्यावृत्ति, आभिमुख्य च जन्मनामन्योन्यापेक्षत्व तच्च सर्वेषामेकसाधनसाध्यत्व यथोक्तम् । एव च यत्र प्रथमो भुजि यत्कर्तृको यत्कर्मकश्च तत्कर्तृकौ तत्कर्मकौ चद् परावपि भुजी तत्रैव उक्ताभ्यावृत्तिपदवाच्याना जन्मना त्रित्वान्वयोऽस्तीति त्रिर्भुङ्क्ते इति प्रयोग । यत्र तु कर्मरूप साधनभेदभिन्नाना भुजीना जन्म तत्राभ्यावृत्त्यभावात् न तादृशप्रयोग । किं तु त्रीणि भोजनानीत्यादिरेवेति । नन्वत्र क्रियाया आख्यातानुपस्थापिततया सिद्धरूपेण प्रतीयमान-

त्वात क्रियाऽभ्यावृत्तिगणने विहितस्य सुचो प्रसङ्ग एव, न च सिद्धरूपस्यापि क्रियात्वमव्याहतमेव अन्यथा भोक्तु पाक इत्यादौ 'कृदभिहिता भावा द्रव्यवत्' इति सिद्धरूपपाकक्रियोपपन्नत्वेन सूत्रे 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन्प्रत्ययाप्रसङ्गादिति वाच्यम्, अन्यत्र तथात्वेऽपि प्रकृते अभ्यावृत्तिग्रहणादेव क्रियाविषयत्वे सिद्धे पुनः क्रियाग्रहणं साध्यावस्थापन्नक्रियाऽभ्यावृत्तिगणन एव प्रत्ययो यथा स्यात्, एकसाधनत्वे द्वौ पाकौ त्रयः पाका इत्यादौ मा भूदित्यसमर्थमित्यङ्गीकृतत्वादिति चेत्, अत्र हरदत्तादयः कृदन्तस्थलेऽपि क्रिया धातुना साध्यावस्थापन्नैव प्रतिपाद्यते । कृता तु सिद्धावस्थापन्नेति धातुप्रतिपाद्यसाध्यावस्थामादाय द्विः पाक इत्याद्युपपत्तिरित्याहुः । वस्तुतस्तु प्रत्ययार्थप्राधान्यात् तत्र सिद्धावस्थामादाय प्रत्ययानुत्पाद एव न्याय्यः, अन्यथा प्रागुत्पादे द्वौ पाकावित्यादावतिप्रसङ्गात् । परं तु 'द्विर्वचनेऽचि' इति सूत्रकारप्रयोगात् क्वचित्कृदन्तयोगेऽपि प्रत्ययो भवतीति ज्ञापकात् द्विरावृत्ति द्विः प्रयोग इत्यादयः समर्थनीया इति कैयटः ॥

तत्फलं प्राप्नुयान्नित्यमेकाधृत्त्या न संशयः ।
मकुटा नामभिः पूज्य कुलकोटिं समुद्धरेत् ॥

एकावृत्त्येति । आवृत्तिशब्दोऽत्र द्वितीयादिपाठनिष्ठावृत्तिताप्रयोजकतया प्रथमपाठलक्षकः । पठेत् प्राप्नुयादिति हेतुलिङ् । सकृद्वेति । एभिर्नामभिरिति शेषः । एतन्नामकरणिकामेकां वा शिवपूजां कुर्यादित्यर्थः । 'एकस्य सकृच्च' इत्यत्र अभ्यावृत्तिग्रहणं निवृत्तं क्रियाग्रहणमात्रमनुवर्तते एको भुङ्क्ते इत्यादिव्यावृत्त्यर्थमिति भाष्यकारोक्तेः सकृच्छब्दस्य क्रियानिष्ठसङ्ख्यामात्रपरत्वेन उक्तार्थे पर्यवसानात् ॥

**बिल्वपत्रैः प्रशस्तैश्च पुष्पैश्च तुलसीदलैः ।**
**तिलाक्षतैर्यजेद्यस्तु जीवन्मुक्तो न संशयः ॥**

बिल्वपत्रैरिति । अत्राप्येभिर्नामभिरिति शेषः । स चोभयत्र प्रकरणलभ्यः । यजेत् पूजयेत्, 'यज देवपूजादिषु' इति स्मरणात् । न संशय इति स्तुत्यर्थवादत्वादेतेषा स्तुतावेव तात्पर्येण वाच्यार्थे शवरुद्रफलप्राप्त्यादावभिनिवेशाभावात् यावत्प्रमाणान्तरदर्शन प्रसक्त. संशयो न कर्तव्य इत्यर्थः । अर्थवादानां स्तुतावेव परमतात्पर्येऽपि मानान्तराविरुद्धे वाच्यार्थे संभवदौत्सर्गिकं प्रामाण्यं न हातव्यमिति स्वर्गार्थवादादिवदस्यैवार्थवादस्य उक्तार्थे प्रमाणत्वादिति भावः । न

चोक्तार्थेऽस्य प्रामाण्यं न संभवति तथा सति गुरुतरशत-रुद्रादिविधायकशास्त्रविरोधादिति वाच्यम्, अधिकारिभेद-व्यवस्थया अविरोधोपपत्तेः । यो ह्यस्मिन्नन्तरङ्गोपायेऽधिक्रियते स ह्यनाधिकारी गुरुतरकृच्छ्रादिरूपप्रायश्चित्तकर्मस्विव गुरु-तरशतरुद्रादिपाठे नाधिक्रियते, यस्त्वेतद्रहस्यानभिज्ञः स परं कर्मनिष्ठो गुरुतरकर्मस्विव शतरुद्रादावधिक्रियते । सहस्ररुद्र-व्यूहान्तर्गतहिरण्यबाहुसेनानीप्रमुखानेकरुद्रप्रतिपादकतया हि 'रुद्रैकादशिनी श्रुतौ' इत्युक्तस्य रुद्राध्यायस्य कर्मकाण्डात् ज्ञानकाण्डस्येव इतरश्रुतिभागापेक्षयाभ्यर्हितत्वम् । अस्य तु स्तोत्रस्य महेश्वरादिव्यूहान्तर्गतश्वेताश्वतरकैवल्यादनेकोपनिष-न्नानास्मृतिपुराणादिदिव्यागमप्रसिद्धानवभवहृदयनेकरहस्य नामालङ्कृततया ततोऽप्यभ्यर्हितत्वं युक्तमेव । एवंविधरहस्यार्थ निबन्धनादेवास्य पुराणभागस्य शिवरहस्यसमाख्योपपत्तिश्च । 'वाचिकादप्युपांशोश्च मानसं कोटिसंमितं । पूजाकोटिसमं स्यात्मां स्यामकोटिसमो जपः ॥ जपकोटिसमं ध्यानं ध्यान कोटिसमो लयः' इत्यादिवचनैः गुरूपायापेक्षया लघूपायस्या-भ्यर्हितत्वेन संप्रतिपन्नतया इहापि तथैव संभवेन मानान्तर-विरोधशङ्काया अप्यभावादुक्तार्थे अस्यैवार्थवादस्य प्रमाण-तया मशयो न कर्तव्य इति साधूक्तम् ॥

निर्मिता शिववासेन नीलकण्ठेन यज्वना ।
शिवतत्त्वरहस्याख्या शिवयो प्रीतये कृतिः ॥

इद समग्र त्वरया स्वयमेव प्रसन्नधी ।
अलिखत्प्रीतये शभोरित्थ समरपुंगव ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य-
चतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्प
यदीक्षितसोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण श्रीनारायण
दीक्षितात्मजन श्रीभूमिदेवीगर्भसंभवन नील-
कण्ठदीक्षितन विरचित श्रीशिवनामाष्टो
त्तरशतस्तोत्रव्याख्यान
श्रीशिवतत्त्वरहस्याख्य
सपूर्णम् ॥



॥ श्रीः ॥

# ॥ श्रीशिवाष्टोत्तरशतनामावलिः ॥

ओं शिवाय नमः ।
ओं महेश्वराय नमः ।
ओं शंभवे नमः ।
ओं पिनाकिने नमः ।
ओं शशिशेखराय नमः ।
ओं वामदेवाय नमः ।
ओं विरूपाक्षाय नमः ।
ओं कपर्दिने नमः ।
ओं नीललोहिताय नमः ।
ओं शंकराय नमः ।
ओं शूलपाणये नमः ।
ओं खट्वाङ्गिने नमः ।
ओं विष्णुवल्लभाय नमः ।
ओं शिपिविष्टाय नमः ।
ओं अम्बिकानाथाय नमः ।

ओं श्रीकण्ठाय नमः ।
ओं भक्तवत्सलाय नमः ।
ओं भवाय नमः ।
ओं शर्वाय नमः ।
ओं त्रिलोकेशाय नमः ।
ओं शितिकण्ठाय नमः ।
ओं शिवाप्रियाय नमः ।
ओं उग्राय नमः ।
ओं कपालिने नमः ।
ओं कामारये नमः ।
ओं अन्धकासुरसूदनाय नमः ।
ओं गङ्गाधराय नमः ।
ओं ललाटाक्षाय नमः ।
ओं कालकालाय नमः ।
ओं कृपानिधये नमः ।
ओं भीमाय नमः ।
ओं परशुहस्ताय नमः ।
ओं मृगपाणये नमः ।
ओं जटाधराय नमः ।

ओं विश्वेश्वराय नमः ।
ओं वीरभद्राय नमः ।
ओं गणनाथाय नमः ।
ओं प्रजापतये नमः ।
ओं हिरण्यरेतसे नमः ।
ओं दुर्धर्षाय नमः ।
ओं गिरीशाय नमः ।
ओं गिरिशाय नमः ।
ओं अनघाय नमः ।
ओं भुजंगभूषणाय नमः ।
ओं भर्गाय नमः ।
ओं गिरिधन्वने नमः ।
ओं गिरिप्रियाय नमः ।
ओं कृत्तिवाससे नमः ।
ओं पुरारातये नमः ।
ओं भगवते नमः ।
ओं प्रमथाधिपाय नमः ।
ओं मृत्युंजयाय नमः ।
ओं सूक्ष्मतनवे नमः ।

श्रीशिवाष्टोत्तरशतनामावलिः ।

ॐ कैलासवासिने नमः ।
ॐ कवचिने नमः ।
ॐ कठोराय नमः ।
ॐ त्रिपुरान्तकाय नमः ।
ॐ वृषाङ्काय नमः ।
ॐ वृषभारूढाय नमः ।
ॐ भस्मोद्धूलितविग्रहाय नमः ।
ॐ सामप्रियाय नमः ।
ॐ स्वरमयाय नमः ।
ॐ त्रयीमूर्तये नमः ।
ॐ अनीश्वराय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ परमात्मने नमः ।
ॐ सोमसूर्याग्निलोचनाय नमः ।
ॐ हविषे नमः ।
ॐ यज्ञमयाय नमः ।
ॐ सोमाय नमः ।
ॐ पञ्चवक्त्राय नमः ।
ॐ सदाशिवाय नमः ।

ओं जगद्व्यापिने नमः ।
ओं जगद्गुरवे नमः ।
ओं व्योमकेशाय नमः ।
ओं महासेनजनकाय नमः ।
ओं चारुविक्रमाय नमः ।
ओं रुद्राय नमः ।
ओं भूतपतये नमः ।
ओं स्थाणवे नमः ।
ओं अहिर्बुध्न्याय नमः ।
ओं दिगम्बराय नमः ।
ओं अष्टमूर्तये नमः ।
ओं अनेकात्मने नमः ।
ओं सात्त्विकाय नमः ।
ओं शुद्धविग्रहाय नमः ।
ओं शाश्वताय नमः ।
ओं खण्डपरशवे नमः ।
ओं अजाय नमः ।
ओं पाशविमोचकाय नमः ।
ओं मृडाय नमः ।